वह्नित्वेऽपर्याप्ततया तदुत्पत्तेर्व्यभिचारः। 'पर्वतो वह्निव्याप्यधूमवानि'ति परामर्शात् पर्वते महानसीयवह्निकल्पने लाघवमित्यादिज्ञानसहकृतात् महानसीयवह्नित्वेन वह्न्यनुमितिस्तु नाभ्युपेयते, व्यापकतावच्छेदकरूपेणैवानुमित्युपगमात्। न च 'वह्निव्याप्यधूमवानि'ति परामर्शात् 'पर्वतो न वह्निमानि'ति बाधकालेऽनुमित्यापत्तिः, विधेयतावच्छेदकतासम्बन्धेन पर्वतत्वावच्छिन्नविशेष्यताकज्ञानं प्रति पर्वतत्वावच्छिन्नविशेष्यतानिरूपिताभावप्रकारतानिरूपितप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतानिरूपितावच्छेदकत्वाख्यविषयतासम्बन्धेन

## ◆ हेमलता ◆

तदुत्पत्तेः = 'पर्वतः प्रमेयवह्निमान्' इत्यनुमित्युत्पादात् व्यभिचारः = व्यतिरेकव्यभिचारः, कुतः ? उच्यते 'पर्वतो प्रमेयवह्निव्याप्यधूमवानि'ति परामर्शीयविधेयतावच्छेदकताया वह्नित्वेऽपर्याप्ततया = शुद्धे वह्नित्वे पर्याप्तिसम्बन्धेन विरहेण। हेत्वर्थे तृतीया ज्ञेया। 'पर्वतः प्रमेयवह्निव्याप्यधूमवानि'तिपरामर्शीयविधेयतावच्छेदकतायाः पर्याप्तिः प्रमेयवह्नित्वे एव न तु शुद्धवह्नित्वे इति 'पर्वतः प्रमेयवह्निमान्' इत्यनुमितिरपि विधेयतावच्छेदकतापर्याप्तिसम्बन्धेन प्रमेयवह्नित्व एव जायते न तु शुद्धवह्नित्वे इति न व्यभिचार इत्यभिसन्धिः।

ननु महानसे प्रथमं धूमे महानसीयवह्निनिरूपिताया व्याप्तेः गृहीतत्वेन वह्निव्याप्यधूमप्रकारक-पर्वतविशेष्यकपरामर्शादपि पर्वते महानसीयवह्नित्वेनैवानुमितिः भवितुमर्हति उपस्थितिकृतलाघवात्। ततश्च व्यतिरेकव्यभिचारस्य दुर्वारत्वम्, 'पर्वतो वह्निव्याप्यधूमवानि'तिपरामर्शस्य विधेयतावच्छेदकतापर्याप्तिसम्बन्धेन शुद्धवह्नित्वे एव सत्त्वेन महानसीयवह्नित्वे विरहात् विधेयतावच्छेदकत्वपर्याप्तिसम्बन्धेन तादृशानुमितिस्तु महानसीयवह्नित्वे जायते इत्याशङ्कामपाकर्तुमुपक्षिपन्ति- पर्वतो वह्निव्याप्यधूमवानि'ति परामर्शात् 'पर्वते महानसीयवह्निकल्पने लाघवं = व्याप्तिस्मरणलक्षणोपस्थितिकृतलाघवं' इत्यादिज्ञानसहकृतात् महानसीयवह्नित्वेन रूपेण वह्न्यनुमितिः ='पर्वतो महानसीयवह्निमानि'त्यनुमितिः तु विधेयतावच्छेदकतापर्याप्तिसम्बन्धेन महानसीयवह्नित्वे नाभ्युपेयते। कुतः ? उच्यते व्यापकतावच्छेदकरूपेणैव अनुमित्युपगमात् न तु व्याप्यतावच्छेदकरूपेणापि। धूमत्वावच्छिन्नव्याप्यतानिरूपितव्यापकतावच्छेदकत्वं तु वह्नित्वस्यैव न तु महानसीयवह्नित्वस्य। ततः शुद्धवह्नित्वस्यैवानुमितिनिरूपितविधेयतावच्छेदकत्वसम्भवः, व्यापकतावच्छेदकतया गृहीतधर्मस्यैवानुमितिविधेयतावच्छेदकत्वनियमात्। ततश्च विधेयतावच्छेदकतापर्याप्तिसम्बन्धेन पर्वतविशेष्यक - वह्निव्याप्यधूमप्रकारकपरामर्शाधिकरणीभूतस्य शुद्धवह्नित्वस्यैव विधेयतावच्छेदकतापर्याप्तिसम्बन्धेन वह्नित्वावच्छिन्नविधेयताकानुमित्यधिकरणत्वान्न व्यतिरेकव्यभिचार इति गुरुचरणानामाकूतम्।

ननु विधेयतावच्छेदकतापर्याप्तिसम्बन्धेनानुमितिपरामर्शयो जन्यजनकभावोपगमे तु 'पर्वतो न वह्निमानि'तिबाधदशायामपि 'वह्निव्याप्यधूमवान् पर्वत' इति परामर्शात् विधेयतावच्छेदकतापर्याप्तिसम्बन्धेन वह्नित्वे 'पर्वतो वह्निमानि'त्यनुमितिप्रसङ्गस्य दुर्वारत्वम्, विधेयतावच्छेदकतापर्याप्तिसम्बन्धेनानुमितित्वावच्छिन्नं प्रति कारणीभूतस्य परामर्शस्य वह्नित्वे विधेयतावच्छेदकतापर्याप्तिसम्बन्धेन सत्त्वात्। न चानुमितित्वावच्छिन्नं 'पर्वतो न वह्निमान्' इति बाधनिश्चयस्य प्रतिबन्धकत्वमिति शङ्कनीयम् तादृशबाधनिश्चयदशायां 'महानसं वह्निव्याप्यधूमवदि'ति परामर्शात् 'महानसं वह्निमदि'त्यनुमितेः विधेयतावच्छेदकतापर्याप्तिसम्बन्धेन वह्नित्वे उत्पत्तेः सर्वानुभवसिद्धत्वात्। न च विशेष्यतावच्छेदकतासम्बन्धेन पर्वतविशेष्यक-वह्निविधेयकानुमितित्वस्य 'पर्वतो न वह्निमानि'ति बाधनिश्चयप्रतिबध्यतावच्छेदकत्वान्नायं दोष इति वक्तव्यम् तथापि पर्वतविशेष्यक-वह्निविधेयकानुमितित्वस्य परामर्शसामान्यकार्यतानवच्छेदकत्वेन विधेयतावच्छेदकतापर्याप्तिसम्बन्धेन वह्नित्वे 'पर्वतो वह्निमानि'त्यनुमितेः दुर्वारत्वादित्याशङ्कामपाकर्तुमुपक्षिपन्ति न चेति। शङ्काग्रन्थोऽवतरणिकायां विभावित एव। तद्व्यपोहे हेतुमाविष्कुर्वन्ति-विधेयतावच्छेदकतासम्बन्धेन पर्वतत्वावच्छिन्नविशेष्यताकज्ञानं = पर्वतत्वावच्छिन्नविशेष्यतानिरूपकज्ञानत्वावच्छिन्नं प्रति पर्वतत्वावच्छिन्नविशेष्यतानिरूपिताभावप्रकारतानिरूपितप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतानिरूपितावच्छेदकत्वाख्यविषयतासम्बन्धेन = पर्वतत्वावच्छिन्नविशेष्यतानिरूपिता याऽभावत्वावच्छिन्नप्रकारता तदवच्छिन्ना तदभिन्ना वा याऽभावत्वावच्छिन्नविशेष्यता तन्निरूपिता या प्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्ना वह्निप्रभृतिनिष्ठा प्रकारता तन्निरूपिता या वह्नित्वादिनिष्ठाऽवच्छेदकता तदात्मकविषयतासंसर्गेण ज्ञानस्य

## ► वल्लभा ◄

विधेयतावगाही अनुमिति नहीं होगी किन्तु वह्नित्वेन ही विधेयता का अवगाहन करनेवाली अनुमिति का जन्म होगा। अर्थात् विधेयतावच्छेदकतापर्याप्तिसम्बन्ध से वह्नित्व में ही 'पर्वतो वह्निमान्' इत्याकारक अनुमिति का जन्म होगा और विधेयतावच्छेदकतापर्याप्ति सम्बन्ध से वह्नित्व में 'पर्वतो वह्निव्याप्यधूमवान्' यह परामर्श भी रहता ही है। इसलिए व्यतिरेक व्यभिचार को अवकाश नहीं है - यह फलित होता है।

### ◆☆ बाधज्ञान अनुमितिविशेष का प्रतिबन्धक—गुरुचरणमत ◇★

न च व०। यहाँ इस शङ्का का कि→"जब किसीको 'पर्वतो न वह्निमान्' इत्याकारक बाधनिश्चय होता है तब भी 'पर्वतो वह्निव्याप्यधूमवान्' यह तत्समकालीन परामर्श विधेयतावच्छेदकतापर्याप्ति सम्बन्ध से वह्नित्व में रहने से विधेयतावच्छेदकतापर्याप्ति सम्बन्ध से वह्नित्व में 'पर्वतो वह्निमान्' इत्याकारक अनुमिति की आपत्ति आयेगी। कारण के रहने पर कार्य का जन्म होना न्यायप्राप्त है"←समाधान यह है कि विधेयतावच्छेदकसम्बन्ध से पर्वतत्वावच्छिन्नविशेष्यताक ज्ञान के प्रति स्वनिरूपितपर्वतत्वावच्छिन्नविशेष्यतानिरूपिताभावप्रकारताऽवच्छि-

ज्ञानस्य प्रतिबन्धकत्वादि''त्याहु ।

अत्रेदमवधेयम्-पर्वते वह्निव्याप्यवत्तापरामर्शाद्बाधाभावबलेन पर्वतविशेष्यिकेव चत्वरविशेष्यिकाऽप्यनुमितिः स्यादिति तद्वारणाय

◆ हेमलता ◆

प्रतिबन्धकत्वात् = प्रतिबन्धकत्वस्वीकारात्। अय भावः विधेयतावच्छेदकतापर्याप्तिसम्बन्धेन वह्नित्वे जायमानायाः 'पर्वतो वह्निमानि'त्यनुमितेः पर्वतत्वावच्छिन्नविशेष्यताकज्ञानत्वलक्षणप्रतिबध्यतावच्छेदकाक्रान्तत्वेन ता प्रति 'पर्वतो न वह्निमानि'ति बाधनिश्चयस्य प्रतिबन्धकत्व, वह्नित्वावच्छिन्नप्रतियोगितानिरूपकाभावप्रकारतानिरूपक-पर्वतत्वावच्छिन्नविशेष्यताकज्ञानस्य स्वनिष्ठविशेष्यितानिरूपितपर्वतत्वावच्छिन्नविशेष्यतानिरूपिताभावत्वावच्छिन्नप्रकारतावच्छिन्नविशेष्यतानिरूपितप्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्नवह्निनिष्ठप्रकारतानिरूपितावच्छेदकत्वलक्षणविषयत्वससर्गेण वह्नित्वे सत्त्वात्। न च पर्वतत्वावच्छिन्नविशेष्यताकज्ञानत्वस्य परामर्शत्वावच्छिन्नकारणतानिरूपितकार्यताया अवच्छेदकत्वात् विधेयतावच्छेदकतापर्याप्तिसम्बन्धेनानुमितित्वस्य च निरुक्तबाधनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यताया अनवच्छेदकत्वान्न 'पर्वतो न वह्निमानि'ति बाधसमकालीनात् 'पर्वतो वह्निव्याप्यधूमवानि'तिपरामर्शात् दहनानुमितिप्रतिरोधः सम्भवतीति वाच्यम् व्याप्यधर्मावच्छिन्नोत्पत्तावशेषव्यापकधर्मावच्छिन्नोत्पादकसामग्र्या अपेक्षितत्वेन 'पर्वतो वह्निमानि'त्यनुमितित्वस्य पर्वतत्वावच्छिन्नविशेष्यताकज्ञानत्वव्यापकतया तदवच्छिन्नोत्पादकसामग्रीमध्ये पर्वतत्वावच्छिन्नविशेष्यतानिरूपिताभावनिष्ठप्रकारतावच्छिन्नविशेष्यतानिरूपितप्रतियोगिताकत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितावच्छेदकताभिधानविषयत्वसम्बन्धावच्छिन्नप्रतियोगिताकज्ञानाभावस्य प्रविष्टत्वेन 'पर्वतो न वह्निमानि'ति बाधकाले तस्याभावेन विधेयतावच्छेदकतापर्याप्तिसम्बन्धेन वह्नित्वे 'पर्वतो वह्निमानि'त्यापत्तेरयोगात्। न हि प्रतिबन्धकसत्त्वे कार्यं भवितुमर्हति। 'पर्वतो न घटवानि'ति ज्ञानसमकालीनात् 'पर्वतो वह्निव्याप्यधूमवानि'तिपरामर्शान्न 'पर्वतो वह्निमानि'त्यनुमित्यसम्भवो निरुक्तसम्बन्धेन बाधज्ञानस्य वह्नित्वे विरहात्। इत्थञ्च समानविधेयतावच्छेदकताप्रत्यासत्त्या परामर्शानुमित्योः सामान्यतो हेतु-हेतुमद्भावान्न लिङ्गोपहितलैङ्गिकभानसिद्धिरिति गुरुचरणाभिसन्धिः।

ननु गुरुचरणामते यथाऽनुमितिपरामर्शयोः समानविधेयतावच्छेदकताप्रत्यासत्त्या सामान्यतो जन्यजनकभावस्तथा समानविशेष्यतावच्छेदकताप्रत्यासत्त्यापि तयोः कार्यकारणभावस्यावश्यकल्पनीयत्वम् अन्यथा 'पर्वतो वह्निव्याप्यधूमवानि'तिपरामर्शात् विधेयतावच्छेदकतापर्याप्तिसम्बन्धेन वह्नित्वे 'चत्वरो वह्निमानि'त्यनुमित्यापत्तेरपि दुर्वारत्वमित्याशयेन प्रकरणकृदाह-अत्रेदमवधेयमिति। पर्वते वह्निव्याप्यवत्तापरामर्शात् = विधेयतावच्छेदकपर्याप्तिसम्बन्धेन वह्नित्वे 'पर्वतो वह्निव्याप्यवानि'तिपरामर्शमाश्रित्य बाधाभावबलेन = वह्नित्वे स्वनिष्ठविशेष्यितानिरूपितपर्वतत्वावच्छिन्नविशेष्यतानिरूपिताभावनिष्ठप्रकारताऽवच्छिन्नविशेष्यतानिरूपित-प्रतियोगिताकत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितावच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताक-ज्ञानाभावलक्षणस्य प्रतिबन्धकाभावस्य=बाधाभावस्य बलेन वह्नित्वे विधेयतावच्छेदकतापर्याप्तिसम्बन्धेन पर्वतविशेष्यिका ='पर्वतो वह्निमान्' इत्याकारिका इव 'चत्वरो वह्निमानि'त्याकारिका चत्वरविशेष्यिकाऽपि अनुमिति स्यात्, कार्यतावच्छेदकतासम्बन्धेन कार्याधिकरणविधयाभिमते कारणतावच्छेदकतासम्बन्धेन कारणस्य प्रतिबन्धकतासम्बन्धावच्छिन्नप्रतियोगिताकस्य प्रतिबन्धकाभावस्य च सत्त्वे कार्योदयस्य न्याय्यत्वात् इति हेतोः तद्वारणाय =

► वल्लभा ◄

न्न (अभिन्न)विशेष्यतानिरूपितप्रतियोगिताकत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितावच्छेदकत्वनामक विषयतासम्बन्ध से ज्ञान प्रतिबन्धक होता है। 'पर्वतो वह्निमान्' इत्याकारक अनुमिति पर्वतत्वावच्छिन्नविशेष्यताक ज्ञानात्मक होने से प्रतिबध्यतावच्छेदकाक्रान्त है और वह वह्निविधेयक होने की वजह विधेयतावच्छेदकतापर्याप्तिसम्बन्ध से शुद्ध वह्नित्व मे रहती है । 'पर्वतो न वह्निमान्' यह बाधनिश्चय पर्वतविशेष्यक एव वह्नित्वावच्छिन्नप्रतियोगिताकाभावप्रकारताक है । अभाव मे वह्नि स्वप्रतियोगिताकत्वसम्बन्ध से रहता है, क्योकि वह अभाव वह्निप्रतियोगिताक है। अभाव पर्वत की अपेक्षा प्रकार है और वह्नि की अपेक्षा विशेष्य। अत अभाव मे एक ही ज्ञान की प्रकारता एव विशेष्यता रहेगी। एक ज्ञानीय समानाधिकरण विषयता परस्पर अवच्छिन्न या अभिन्न होती है। वह्नि अभाव मे स्वप्रतियोगितानिरूपकत्व सम्बन्ध से रहने से वह्नि मे रहनेवाली अभावीय प्रकारता प्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्न होगी जिसका अवच्छेदक धर्म है वह्नित्व । अत 'पर्वतो न वह्निमान्' यह निश्चय स्वनिरूपित-पर्वतत्वावच्छिन्न-विशेष्यतानिरूपिताभावनिष्ठप्रकारताऽभिन्न(या अवच्छिन्न)विशेष्यतानिरूपितप्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्न पकारता से निरूपित अवच्छेदकत्वनामक विधेयतासम्बन्ध से वह्नित्व मे रहेगा। कार्यतावच्छेदकसम्बन्ध से कार्याधिकरणविधया अभिमत मे प्रतिबन्धकतावच्छेदकसम्बन्ध से प्रतिबन्धक रहने पर कार्य का जन्म हो नही सकता, क्योकि प्रतिबन्धकाभाव भी कार्यजनक होने से सामग्रीप्रविष्ट होता है। अत 'पर्वतो न वह्निमान्' इत्याकारक बाधकालीन 'पर्वतो वह्निव्याप्यधूमवान्' इत्याकारक परामर्श से 'पर्वतो वह्निमान्' इत्याकारक अनुमिति के उदय की आपत्ति की कोई शक्यता रहती नही है।

► गुरुचरणमत मे कल्पनागौरव ◄

अत्रेदम०। यहाँ पकरणकार श्रीमद् का यह कथन है कि निरुक्त गुरुचरणमत मे यह बात ध्यातव्य है कि-->जब किसीको

विशेष्यतावच्छेदकतासम्बन्धेनापि परामर्शस्य पृथक्कारणता वाच्या ।

विशेष्यतावच्छेदकतासम्बन्धेन वह्निविधेयकानुमितिं प्रति च वह्नित्वविषयतावच्छिन्नावच्छिन्नत्वविषयतावच्छिन्नप्रतियोगित्वविषयतानिरूपिताभावविषयतानिरूपितविशेषणतासंसर्गावच्छिन्नविशेष्यतानिरूपितावच्छेदकत्वाख्यविषयतासम्बन्धेन ज्ञानस्य प्रतिबन्धकत्वं,

◆ हेमलता ◆

पर्वतविशेष्यकधूमपरामर्शाच्चत्वरविशेष्यकानुमितिनिरासकरणकृते विशेष्यतावच्छेदकतासम्बन्धेन = स्वनिष्ठविशेष्यितानिरूपितविशेष्यतानिरूपितावच्छेदकत्वाख्यविषयतासम्बन्धेन अपि किमुत विधेयतावच्छेदकतापर्याप्तिसम्बन्धेनेत्यपिशब्दार्थः, परामर्शस्य =व्याप्यत्वावगाहिनिश्चयस्य पृथक्कारणता = स्वातन्त्र्येण हेतुता वाच्या = अवश्यकल्पनीया। स्वनिरूपितविशेष्यतावच्छेदकतासम्बन्धेन पर्वतत्वे विद्यमानस्य 'पर्वतो वह्निव्याप्यवानि'ति परामर्शस्य तेन सम्बन्धेन चत्वरत्वे विरहान्न चत्वरे स्वीयविशेष्यतावच्छेदकत्वसम्बन्धेन 'चत्वरो वह्निमानि'ति चत्वरविशेष्यकवह्निविधेयकानुमितिप्रसङ्गः, कारणान्तरविरहे कार्योदयासम्भवात्, 'सामग्री वै कार्यजनिका न त्वेकं कारणमि'त्यभियुक्तोक्तेः।

ननु समानविशेष्यतावच्छेदकतासम्बन्धेनानुमितिपरामर्शयोः कार्यकारणभावे तु 'पर्वतो न वह्निमान्' इति बाधदशायामपि 'पर्वतो वह्निव्याप्यधूमवानि'ति परामर्शात् स्वनिरूपितविशेष्यतावच्छेदकतासम्बन्धेन पर्वतत्वे 'पर्वतो वह्निमानि'त्यनुमितिप्रसङ्गस्य दुर्वारत्वम्, स्वनिरूपितविशेष्यतावच्छेदकतासम्बन्धेनानुमितिं प्रति कारणीभूतस्य परामर्शस्य पर्वतत्वे विशेष्यतावच्छेदकतासम्बन्धेन सत्त्वात्। न च पर्वतविशेष्यकानुमितित्वावच्छिन्नं प्रति 'पर्वतो न वह्निमानि'ति ज्ञानस्य प्रतिबन्धकत्वान्नाय दोष इति वक्तव्यम्, तादृशनिश्चयदशायामपि 'पर्वतो घटव्याप्यवानि'ति परामर्शात् 'पर्वतो घटवानि'त्यनुमितेः पर्वतविशेष्यिकाया मार्जनीनत्वात् । एतेन विशेष्यतावच्छेदकतया वह्निविधेयकानुमितिं प्रति वह्न्यभावप्रकारक-पर्वतविशेष्यतावच्छेदकतासम्बन्धेन ज्ञानस्य प्रतिबन्धकत्वमित्यपि प्रत्युक्तम् 'वह्न्यभाववान् ह्रदः पर्वतश्चे'तिज्ञानस्यापि तत्प्रतिबन्धकत्वापत्तेः। न च वह्न्यभावनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन ज्ञानस्य प्रतिबन्धकत्वमिति वाच्यम् 'पर्वतः कालिकेन वह्न्यभाववानि'ति ज्ञानस्यापि तत्प्रतिबन्धकत्वापत्तेः। न च वह्न्यभावनिष्ठविषयतानिरूपितविशेषणतासंसर्गावच्छिन्नविशेष्यतावच्छेदकत्वसम्बन्धेन ज्ञानस्य तत्प्रतिबन्धकत्वमित्युद्भावनीयम्, तथापि द्रव्यत्वावच्छिन्नप्रतियोगिताकवह्न्यभावप्रकारताकपर्वतविशेष्यकज्ञानस्य तत्प्रतिबन्धकत्वापत्तेः। ततश्च विशेष्यतावच्छेदकत्वसम्बन्धेन = स्वनिष्ठविशेष्यितानिरूपितविशेष्यतानिरूपितावच्छेदकताख्यविषयतासंसर्गेण वह्निविधेयकानुमितिं = वह्नित्वावच्छिन्नविधेयतानिरूपकानुमितित्वावच्छिन्नं प्रति च वह्नित्वविषयतावच्छिन्नावच्छिन्नत्वविषयतावच्छिन्नप्रतियोगित्वविषयतानिरूपिताभावविषयतानिरूपितविशेषणतासंसर्गावच्छिन्नविशेष्यतानिरूपितावच्छेदकत्वाख्यविषयतासम्बन्धेन ज्ञानस्य प्रतिबन्धकत्वं स्वीकर्तव्यम्। तथाहि 'पर्वतो न वह्निमान्' इत्यस्य वह्नित्वावच्छिन्नप्रतियोगितानिरूपकाभावप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताकत्वेन वह्नित्वेऽवच्छिन्नत्वे प्रतियोगितायामभावे पर्वते पर्वतत्वे च विषयता वर्तते। अतः वह्नित्वनिष्ठविषयतया निरूपिता विषयताऽवच्छिन्नत्वे भासते तच्च प्रतियोगितायां भासते सा चाभावे स च पर्वते स च पर्वतत्वे। ततः वह्नित्वनिष्ठविषयतयाऽवच्छिन्नत्वनिष्ठविषयताऽवच्छिद्यते। अवच्छिन्नत्वनिष्ठविषयतया च प्रतियोगितानिष्ठविषयताऽवच्छिद्यते। प्रतियोगितानिष्ठविषयतया चाऽभावनिष्ठविषयताऽवच्छिद्यते।

▶ वल्लभा ◀

'पर्वतो वह्निव्याप्यधूमवान्' इत्याकारक परामर्श होता है वह विधेयतावच्छेदकतापर्याप्तिसम्बन्ध से वह्नित्व में रहता है जिससे जैसे पर्वतविशेष्यक अनुमिति होती है ठीक वैसे ही चत्वरविशेष्यक अनुमिति भी होने लगेगी, क्योंकि विधेयतावच्छेदकतापर्याप्तिसम्बन्ध से चत्वरत्वावच्छिन्नविशेष्यतादिस्वरूप निरुक्तविषयता सम्बन्ध से बाधज्ञान रहता नहीं है और पर्वतविशेष्यक धूमपरामर्श विधेयतावच्छेदकतापर्याप्तिसम्बन्ध से वह्नित्व में रहता है। मगर पर्वतविशेष्यक धूमपरामर्श से कभी भी चत्वरविशेष्यक दहनानुमिति नहीं होती है। अतः उसके वारणार्थ विशेष्यतावच्छेदकतासम्बन्ध से अनुमिति के प्रति विशेष्यतावच्छेदकतासम्बन्ध से परामर्श को कारण मानना पड़ेगा। 'पर्वतो वह्निव्याप्यधूमवान्' इत्याकारक परामर्श विशेष्यतावच्छेदकतासम्बन्ध से पर्वतत्व में रहता है न कि चत्वरत्व में। अतः विशेष्यतावच्छेदकतासम्बन्ध से चत्वरत्व में 'चत्वरो वह्निमान्' इत्याकारक अनुमिति का अवकाश नहीं रहेगा। कार्यतावच्छेदकसम्बन्ध से कार्याधिकरणविधया अभिमत में कारणतावच्छेदकसम्बन्ध से कारण न रहने पर कार्य का उदय कैसे हो सकता है?

विशे० इति। यहाँ इस बात पर ध्यान रखना जरूरी है कि विशेष्यतावच्छेदकतासम्बन्ध से वह्निविधेयक अनुमिति के प्रति जैसे विशेष्यतावच्छेदकता सम्बन्ध से परामर्श कारण होता है वैसे विषयताविशेषसम्बन्ध से 'पर्वतो न वह्निमान्' यह बाधनिश्चय प्रतिबन्धक होता है। 'पर्वतो न वह्निमान्' इस ज्ञान में पर्वत विशेष्य है और वह्नित्वावच्छिन्नप्रतियोगिताकाभाव विशेषण है। वह्नित्व में रहनेवाली विषयता का अवच्छिन्नत्ववृत्ति विषयता में प्रकारविधया भान होता है, अवच्छिन्नत्ववृत्ति विषयता का प्रतियोगितावृत्ति विषयता में भान होता है, प्रतियोगितानिष्ठ विषयता का अभाववृत्ति विषयता में भान होता है। अर्थात् वह्नित्ववृत्तिविषयता से विशिष्ट=अवच्छिन्न होगी अवच्छिन्नत्वनिष्ठ विषयता और उससे अवच्छिन्न=विशिष्ट होगी प्रतियोगितावृत्ति विषयता एवं उससे विशिष्ट=अवच्छिन्न होगी अभावनिष्ठ

नातः 'पर्वतो न वह्निमानि'ति बाधकाले पर्वतत्वे विशेष्यतावच्छेदकतयाऽनुमित्यापत्तिः।

विशेष्यतावच्छेदकतासम्बन्धेन पर्वतविशेष्यकज्ञान प्रति च पर्वतत्वावच्छिन्नविशेष्यतानिरूपिताभावप्रकारतानिरूपितप्रतियोगितासम्बन्धावच्छिन्नप्रकारतासम्बन्धेन ज्ञानस्य प्रतिबन्धकत्वान्न 'पर्वतो न नील' इति बाधकाले नीलपर्वतत्वपर्याप्तविशेष्यता(वच्छेदकता) कपरामर्शात्तादृशानुमित्युत्पत्तिरिति।

## ◆ हेमलता ◆

तादृशाभावस्य पर्वते दैशिकविशेषणताविशेषसम्बन्धेन वर्तमानतया पर्वतनिष्ठदैशिकविशेषणताविशेषसम्बन्धावच्छिन्ना विशेष्यता अभावनिष्ठविषयतयाऽवच्छिद्यते। पर्वतत्वनिष्ठाऽवच्छेदकत्वाभिधानविषयता पर्वतनिष्ठविशेष्यतयाऽवच्छिद्यते। प्रकृतेऽवच्छिन्नत्व निरूपितत्वार्थे बोध्यम्। न अत 'पर्वतो न वह्निमान्' इति बाधकाले तस्य ज्ञानस्य स्वनिरूपितवह्नित्वनिष्ठविषयताऽवच्छिन्नत्वनिष्ठविषयताऽवच्छिन्नप्रतियोगितानिष्ठविषयताऽवच्छिन्नाऽभावनिष्ठविषयताऽव- च्छिन्नदैशिकविशेषणताविशेषसम्बन्धावच्छिन्नपर्वतनिष्ठविशेष्यताऽवच्छिन्नपर्वतत्वनिष्ठावच्छेदकत्वाभिधानविषयतासंसर्गेण पर्वतत्वे सत्त्वदशाया न नत्र विशेष्यतावच्छेदकतया = स्वनिष्ठविशेष्यितानिरूपितविशेष्यतानिरूपितावच्छेदकत्वाख्यविषयतासम्बन्धेन अनुमित्यापत्ति = 'पर्वतो वह्निमानि'त्यनुमितिप्रसङ्गः। ज्ञाननिष्ठप्रतिबन्धकतावच्छेदकसम्बन्धविधया प्रकृते स्वनिष्ठप्रकारितानिरूपितवह्नित्वनिष्ठप्रकारताख्यविषयतानिरूपितावच्छिन्नत्वनिष्ठविशेष्यताऽवच्छिन्नप्रकारताभिधानविषयतानिरूपितप्रतियोगित्वनिष्ठविशेष्यताऽवच्छिन्नप्रकारतानिरूपिताभावनिष्ठविशेष्यताऽवच्छिन्नप्रकारतानिरूपित-दैशिकविशेषणताविशेषावच्छिन्नपर्वतनिष्ठविशेष्यतानिरूपितावच्छेदकताभिधानविषयतासम्बन्धस्याऽपि ग्रहण सम्भवति, एकज्ञानीयसमानाधिकरणविषयताना परस्परमवच्छेद्यावच्छेदकभावोपगमात्। यदि चावच्छिन्नत्वस्यात्र निरूपितत्वसम्बन्धेन वैशिष्ट्यपरत्व विवक्ष्यते तदा विशेष्यतावच्छेदकतासम्बन्धेन वह्निविधेयताकानुमिति प्रति स्वनिष्ठप्रकारितानिरूपितवह्नित्वनिष्ठप्रकारताख्यविषयताविशिष्टावच्छिन्नत्वनिष्ठविशेष्यताऽवच्छिन्नप्रकारताविशिष्टप्रतियोगित्वनिष्ठविशेष्यताऽवच्छिन्नप्रकारताख्यविषयताविशिष्टाभावत्वावच्छिन्नविशेष्यताऽवच्छिन्नप्रकारताऽवच्छिन्न-दशिकविशेषणताविशेषसम्बन्धावच्छिन्नविशेष्यताऽवच्छिन्नप्रकारताविशिष्टावच्छेदकत्वाख्यविशेष्यतासम्बन्धेन ज्ञानस्य प्रतिबन्धकत्वमिति भावनीयमभ्यस्तन्यायशास्त्रैः।

ननु तथापि 'पर्वतो न नील' इत्याश्रयासिद्धिदशाया 'नीलपर्वतो वह्निव्याप्यधूमवानि'ति परामर्शात् स्वनिष्ठविशेष्यितानिरूपितविशेष्यतावच्छेदकसम्बन्धेन नीलपर्वतत्वे 'नीलपर्वतो वह्निमानि'त्यनुमित्यापत्तेर्दुर्वारत्वम् स्वनिरूपितविशेष्यतावच्छेदकतया परामर्शस्य तत्र सत्त्वादित्याशङ्कायामाह- विशेष्यतावच्छेदकतासम्बन्धेन = स्वनिष्ठविशेष्यितानिरूपितविशेष्यतानिरूपितावच्छेदकत्वनिरूपितपर्याप्तिसंसर्गेण, पर्वतविशेष्यकज्ञान प्रति च पर्वतत्वावच्छिन्नविशेष्यतानिरूपिताभावप्रकारतानिरूपितप्रतियोगितासम्बन्धावच्छिन्नप्रकारतासम्बन्धेन = पर्वतत्वावच्छिन्नमुख्यविशेष्यतानिरूपिताभावत्वावच्छिन्नप्रकारताऽवच्छिन्नविशेष्यतानिरूपित-प्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्नप्रकारताख्यविषयतासंसर्गेण ज्ञानस्य = ज्ञानत्वावच्छिन्नस्य प्रतिबन्धकत्वात् = प्रतिबन्धकत्वस्यावश्यकल्पनीयत्वात् न 'पर्वतो न नील' इति बाधकाले = पक्षतावच्छेदकाभावप्रकारकनिश्चयदशाया 'नीलपर्वतो वह्निव्याप्यधूमवानि'त्याकारकात् नीलपर्वतत्वपर्याप्तविशेष्यतावच्छेदकताकपरामर्शात् तादृशानुमित्यापत्ति = 'नीलपर्वतो वह्निमानि'त्यनुमित्युत्पाद्यापत्तिः,

## ▶ वल्लभा ◀

विषयता। तथा यह अभाव देशिकविशेषणताविशेषसम्बन्ध से पर्वत मे रहने से पर्वत मे रहनेवाली विशेष्यता देशिकविशेषणताविशेषसम्बन्धावच्छिन्न होगी और निरुक्त अभावनिष्ठप्रकारताख्य विषयता से वह निरूपित होगी। पर्वत मे रहनेवाली विशेष्यता वह्नित्वनिष्ठविषयतावच्छिन्नअवच्छिन्नत्वनिष्ठविषयताऽवच्छिन्न-प्रतियोगितावृत्तिविषयताऽवच्छिन्न-अभावनिष्ठविषयतानिरूपितदशिकविशेषणताविशेषसम्बन्धावच्छिन्न होगी। तादृशविशेष्यता की अवच्छेदकता पर्वतत्व मे रहेगी। अत 'पर्वतो न वह्निमान्' यह ज्ञान स्वनिरूपितवह्निनिष्ठविषयत्वाऽवच्छिन्नावच्छिन्नत्वनिष्ठविषयत्वाऽवच्छिन्नप्रतियोगित्वनिष्ठविषयतानिरूपिताभावनिष्ठविषयतानिरूपित-देशिकविशेषणताविशेषसम्बन्धावच्छिन्नविशेष्यतानिरूपितावच्छेदकत्वाभिधानविषयता सम्बन्ध से पर्वतत्व मे रहने से विशेष्यतावच्छेदकता सम्बन्ध से पर्वतत्व मे 'पर्वतो वह्निमान्' यह अनुमिति उत्पन्न हो नही सकती। कार्यतावच्छेदकसम्बन्ध से कार्याधिकरणविधया अभिमत मे प्रतिबन्धकतावच्छेदकतासम्बन्ध से प्रतिबन्धक के रहने पर कार्य का उदय हो नही सकता।

### ▶▶ आश्रयासिद्धिज्ञान भी अनुमितिप्रतिबन्धक ◀◀

विशे०। यहाँ यह भी ज्ञातव्य है कि विशेष्यतावच्छेदकतासम्बन्ध से यानी स्वनिरूपितविशेष्यतावच्छेदकतापर्याप्तिसंसर्ग से पर्वतविशेष्यकज्ञान के प्रति पर्वतत्वावच्छिन्नविशेष्यतानिरूपिताभावप्रकारतानिरूपितप्रतियोगिता(कत्व)सम्बन्धावच्छिन्न प्रकारता सम्बन्ध से ज्ञान प्रतिबन्धक होता है। इसलिए तो 'पर्वतो न नील' ऐसा बाधज्ञान = आश्रयासिद्धिज्ञान होने पर 'नीलपर्वतो वह्निव्याप्यधूमवानि'तिआकारक नीलपर्वतत्वपर्याप्तविशेष्यतावच्छेदकताकपरामर्श से 'नीलपर्वतो वह्निमान्' इत्याकारक अनुमिति की उत्पत्ति की आपत्ति को अवकाश रहता नही है। आशय यह है कि 'पर्वतो न नील' इस ज्ञान मे पर्वत है विशेष्य, पर्वतत्व है विशेष्यतावच्छेदक, नीलत्वावच्छिन्नप्रतियोगिताकअभाव है प्रकार, अभाव मे प्रतियोगिताकत्वसम्बन्ध से नीलत्व भी प्रकार है। अत अभाव पर्वत की अपेक्षा विशेषण एव नीलत्व की अपेक्षा विशेष्य होगा। एकज्ञानीय

इदन्तु चिन्त्यम् - यत् 'पर्वतो वह्निव्याप्यधूमवान् भूतलं घटव्याप्यसंयोगविशेषवदि'ति-समूहालम्बनपरामर्शात् 'पर्वतो

◆ हेमलता ◆

कार्यतावच्छेदकतासम्बन्धेन कार्याधिकरणविधयाऽभिमते प्रतिबन्धकतावच्छेदकसम्बन्धेन प्रतिबन्धकसत्त्वे कार्योदयाऽयोगात्। 'नीलपर्वतो वह्निव्याप्यधूमवा-नि'त्यत्र भवानन्दमतानुसारेण न केवलं नीलत्वस्य विशेष्यतावच्छेदकत्वे, नीलरूपवत उत्पलादेरपि पक्षत्वापत्तेः न वा केवलं पर्वतत्वस्य विशेष्यतावच्छेदकत्वे पीतादिपर्वतस्यापि पक्षत्वप्रसङ्गात्। न च नीलत्वविशिष्टपर्वतत्वस्य तथात्वमिति वक्तव्यम् विशेषणविशेष्यभावे विनिगमनाविरहेण पर्वतत्वविशिष्टनीलत्वादेरपि तत्त्वापातेन महागौरवात्। ततो नीलत्वे पर्वतत्वे तदुभयगतेऽपेक्षाबुद्धिविशेषविषयत्वरूपे द्वित्वे च विशेष्यतावच्छेदकताऽवश्यं स्वीकार्या। 'पर्वतो न नील' इतिज्ञाने पर्वतस्य विशेष्यत्वमभावस्य विशेषणत्वं तत्र च प्रतियोगितानिरूपकतासम्बन्धेन नीलत्वं विशेषणम्। ततः स्वनिष्ठविशेष्यितानिरूपितपर्वत-त्वावच्छिन्नविशेष्यतानिरूपिताभावनिष्ठविशेषणताऽवच्छिन्नविशेष्यतानिरूपित-प्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्नप्रकारतासम्बन्धेन ज्ञानस्य नीलत्वे सत्त्वान्न 'नीलपर्वतो वह्निमानि'त्यनुमितिः विशेष्यतावच्छेदकतापर्याप्तिसम्बन्धेनोत्पत्तुमर्हति।

केवलं पर्वतत्वे तु विशेष्यतावच्छेदकतासम्बन्धेन 'पर्वतो वह्निमान्' इत्यनुमितिस्तु 'पर्वतो न नील' इतिज्ञानदशायामपि 'नीलपर्वतो वह्निव्याप्यधूमवानि'तिपरामर्शान्निराबाधा, कार्यतावच्छेदकतासम्बन्धेन कार्याधिकरणविधयाऽभिमते पर्वतत्वे प्रतिबन्धकतावच्छेदकसम्बन्धेन प्रतिबन्धकस्या-ऽसत्त्वात्, तस्य नीलत्वे एव प्रतिबन्धकतावच्छेदकसम्बन्धेन सत्त्वात्। एतेन 'पटो न नील' इतिनिश्चयदशायां 'नीलपर्वतो वह्निव्याप्यधूमवानि'तिपरामर्शसत्त्वे तादृशानुमित्यनापत्तिरपि प्रत्युक्ता नीलत्वावच्छिन्नप्रतियोगिताकाभावनिष्ठप्रकारतानिरूपितविशेष्यतायाः पर्वतत्वानवच्छिन्नत्वेन विशेष्यतावच्छेदकतापर्या-प्तिसम्बन्धेन 'नीलपर्वतो वह्निमानि'त्यनुमित्याः प्रकरणे पर्वतत्वावच्छिन्नविशेष्यतानिरूपिताभावनिष्ठप्रकारतावच्छिन्नविशेष्यतानिरूपित-प्रतियोगिताकत्वसम्बन्धावच्छिन्नप्रकारताख्यविषयतासम्बन्धेन तादृशानुमितिप्रतिबन्धकस्य ज्ञानस्य विरहात्। न चैव कल्पनाया महागौरवमिति वक्तव्यम्, सिद्ध्यसिद्धिभ्यां व्याघातेन फलमुखस्य तस्यादोषत्वात्, अन्यथा शून्यवादिमतप्रवेशापातात्। इत्थञ्च न लिङ्गोपहितलैङ्गिकभानसिद्धिरिति गुरुचरणमतपरि-ष्कारः, सापस्कारत्वात् महर्षिवचनानाम्।

साम्प्रतमान्वीक्षिकीविद्यापारगः प्रकरणकारः गुरुचरणमतमपहस्तयितुमुपक्रमते-इदन्तु चिन्त्यमिति। चिन्तावीजमेवाऽऽवेदयति-यदिति। निरुक्तपराम-र्शस्य स्वनिरूपितविधेयतावच्छेदकत्वसम्बन्धेन वह्नित्वे घटत्वे च सत्त्वात् स्वीयविधेयतावच्छेदकसम्बन्धेन आपाद्यमानाया अनुमितेरपि वह्निघटोभयविधेय-कत्वेन तत्रैव सत्त्वात्तादृशानुमित्यापत्तेः परिणेतुमशक्यत्वम्। एवं स्वनिष्ठविशेष्यितानिरूपितविशेष्यतावच्छेदकत्वसम्बन्धेन निरुक्तपरामर्शस्य पर्वतत्वे भूतलत्वे च सत्त्वात् स्वीयविशेष्यतावच्छेदकतासम्बन्धेनापाद्यमानाया अनुमितेरपि पर्वतभूतलोभयोद्देश्यकत्वेन तत्रैव सत्त्वात्तादृशानुमित्यापादनं द्रष्टव्यम्।

▶ वल्लभा ◀

समानाधिकरण विषयता परस्पर अवच्छिन्न होती है। अतः पर्वतत्वावच्छिन्नविशेष्यता से निरूपित अभावनिष्ठप्रकारता से अवच्छिन्न विशेष्यता से निरूपित प्रतियोगिकत्वसम्बन्धावच्छिन्न प्रकारता नीलत्व में रहेगी। अतः 'पर्वतो न नील' यह ज्ञान स्वनिष्ठपर्वतत्वावच्छिन्नविशेष्यतानिरूपित-प्रतियोगिताकत्वसम्बन्धावच्छिन्न प्रकारता सम्बन्ध से नीलत्व में रहेगा और वहाँ विशेष्यतावच्छेदकतासम्बन्ध से होनेवाली 'नीलपर्वतो वह्निमान्' इस अनुमिति का प्रतिरोध करेगा, भले ही विशेष्यतावच्छेदकतासम्बन्ध से नीलत्व में 'नीलपर्वतो वह्निव्याप्यधूमवान्' यह परामर्श रहे। प्रस्तुत परामर्श में विशेष्यतावच्छेदक नीलत्व यानी नीलरूप है-इस बात का ख्याल में रखना जरूरी है। इस तरह प्रस्तुत विचारविमर्श से यह फलित होता है कि कार्यतावच्छेदक में धूमलिङ्गकत्वादि का निवेश नहीं होने से लिङ्गोपहित लैङ्गिकभान की सिद्धि नामुमकिन है। यह गुरुचरणमत का तात्पर्य है।

▲△ गुरुचरणमतनिराकरण ▲△

इदन्तु चि०। मगर प्रकरणकार श्रीमद्जी का गुरुचरणमत के खिलाफ यह मन्तव्य है कि निदर्शित मत चिन्तनीय है। प्रस्तुत में विचारणीय यह है कि गुरुचरणमत के अनुसार कार्य-कारणभाव का स्वीकार करने पर भी 'पर्वत वह्निव्याप्यधूमवान् भूतल घटव्याप्यसंयोगविशेषवत्' इत्याकारक समूहालम्बनात्मक परामर्श, जो अनेकविध मुख्य विशेष्यता का अवगाहन करता है, के उत्तर क्षण में 'पर्वत घटवान् भूतल वह्निमत्' इत्याकारक अनुमिति होने की आपत्ति आयेगी। इसका कारण यह है कि दर्शित परामर्श विधेयतावच्छेदकतासम्बन्ध से वह्नित्व और घटत्व में रहता है तथा विशेष्यतावच्छेदकतासम्बन्ध से पर्वतत्व और भूतलत्व में रहता है एवं आपाद्यमान अनुमिति भी विधेयतावच्छेदकतासम्बन्ध से वह्नित्व और घटत्व में रहेगी तथा विशेष्यतावच्छेदकतासम्बन्ध से पर्वतत्व और भूतलत्व में रहेगी जिससे कार्य-कारण में सामानाधिकरण्य अबाधित रहता है। गुरुचरणमतानुसार अनुमिति-परामर्श के बीच सामान्यतः दर्शित कार्यकारणभाव का स्वीकार, उक्त आपत्ति की वजह, नहीं किया जा सकता।

घटवान् भूतल वह्निमदि'त्यनुमित्यापत्तिः। न च पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितघटत्वावच्छिन्नविधेयताकानुमितित्व परामर्श-कार्यतानवच्छेदकमिति न तदवच्छिन्नापत्तिः, सिद्ध्यभावादिकार्यतावच्छेदकत्वात् तस्य।

अथानुमिताविव परामर्शेऽपि पक्षसाध्ययोरुद्देश्यविधेयभावस्य प्रामाणिकत्वे पर्वतत्वाद्यवच्छिन्नोद्देश्यतानिरूपितविधेयतावच्छे-

## ◆ हेमलता ◆

तत॰ सामान्यतोऽनुमितिपरामर्शयोः निरुक्तसमानावच्छेदकत्वप्रत्यासत्त्या कार्यकारणभावपुरस्कारेण लिङ्गोपहितलैङ्गिकभानाऽसिद्धिकरणेऽपि प्रकृतापत्तेर्दुर्वारत्वादजा निष्काशयतः क्रमेलकापात इति प्रकरणकृत्तात्पर्यम्।

न चेति। न तदवच्छिन्नापत्तिरित्यनेनास्यान्वयः। पर्वतत्वेत्याद्युपलक्षण भूतलत्वावच्छिन्नोद्देश्यतानिरूपितवह्नित्वावच्छिन्नविधेयताकानुमितित्व-स्यापि। परामर्शकार्यतानवच्छेदक = निरुक्तनानामुख्यविशेष्यताशालिपरामर्शनिष्ठकारणतानिरूपितकार्यतानिरूपितावच्छेदकत्वशून्य इति हेतोः न तदवच्छिन्नापत्ति न पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितघटत्वावच्छिन्नविधेयतानिरूपकानुमितित्वावच्छिन्नस्य भूतलत्वावच्छिन्नोद्देश्यतानिरूपितघट-त्वावच्छिन्नविधेयतानिरूपकानुमितित्वावच्छिन्नस्य च प्रसङ्गः। न हि स्वकार्यतानवच्छदेकावच्छिन्न स्वेनापादयितु शक्यते इति शङ्काकृदभिप्रायः।

प्रकरणकृत्तन्निरासे हेतुमाह- सिद्ध्यभावादिकार्यतावच्छेदकत्वात् तस्य = पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितघटत्वावच्छिन्नविधेयताकानुमितित्वस्य भूतलत्वावच्छिन्नोद्देश्यतानिरूपितवह्नित्वावच्छिन्नविधेयताकानुमितित्वस्य च। अय समाधानाशयः सिद्धेरनुमितिप्रतिवन्धकत्वादनुमितित्वावच्छिन्न-सिद्धिप्रतियोगिकाभावस्य कारणत्वम्। ततः पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितघटत्वावच्छिन्नविधेयताकानुमितित्व पर्वतत्वावच्छिन्नविशेष्यतानिरूपितघट-त्वावच्छिन्नप्रकारताकनिश्चयाभावस्य कार्यतावच्छेदक भूतल- त्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताकनिश्चयाभावस्य कार्यतावच्छेदक भूतलत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताकनिश्चयाभावस्य जन्यतावच्छेदकञ्च भूतलत्वावच्छिन्नोद्देश्यतानिरूपितवह्नित्वावच्छिन्नविधेय-ताकानुमितित्वम्। निरुक्तप्रतिवन्धकाऽभावसत्त्वात् प्रदर्शितपरामर्शस्याऽपि कार्याधिकरणविधयाऽभिमते सत्त्वात् 'पर्वतो घटवान् भूतल वह्निमदि'तिसमूहाल-म्वनानुमित्यापत्तेर्वज्रलेपायितत्वमिति प्रकरणकृत आशयः।

गुरुचरणमतानुयायी शङ्कते-अथेति। चेदित्यनेनास्यान्वय॰। अनुमितो इव परामर्शेऽपि पक्षसाध्ययो उद्देश्यविधेयभावस्य प्रामाणिकत्वे स्वीक्रियमाणे

## ▶ वल्लभा ◀

न च प०। यहाँ यह वक्तव्य कि—›'उक्त परामर्श का कार्यतावच्छेदक पर्वतत्वावच्छिन्नउद्देश्यतानिरूपितघटत्वावच्छिन्नविधेयताकानुमितित्व नही हे। आपने जिस अनुमिति का आपादन किया हे वह पर्वतत्वावच्छिन्न उद्देश्यता से निरूपित घटत्वावच्छिन्न विधेयता की निरूपक हे, क्योकि उसमे पर्वत को उद्देश्य बना कर घट का विधान किया जाता है। जो विवक्षित कारण की कार्यता के अवच्छेदक धर्म से अनाक्रान्त हो उसका आपादन विवक्षित कारण के वल मे केसे हो सकता है? अपने कार्यतावच्छेदक धर्म से विशिष्ट का ही आपादन अपनी उपस्थिति मे किया जा सकता है'←—नामुनासिव होने का कारण यह है कि पर्वतत्वाच्छिन्नउद्देश्यतानिरूपितघटत्वावच्छिन्नविधेयतानिरूपक अनुमितित्व भले ही उपर्युक्त समूहालम्वनात्मक परामर्श का कार्यतावच्छेदक न हो लेकिन पर्वत मे घट का अवगाहन करनेवाली सिद्धि=निश्चय के, जो पर्वतत्वावच्छिन्नविशेष्यतानिरूपित-घटत्वावच्छिन्नविधेयतानिरूपक हे, अभाव का कार्यतावच्छेदक तो हे ही, क्योकि तादृशसिद्धि उपदर्शित कार्यतावच्छेदक धर्म से विशिष्ट अनुमिति की प्रतिवन्धक हे। उपर्युक्त सिद्धि का अभाव विद्यमान होने से प्रोक्त परामर्श के होने पर उपदर्शित अनुमिति का उदय भी होने लगेगा, जो किसीको मान्य नही है। इसलिए गुरुचरणमत अश्रद्धेय हे।

शङ्का :- अथा०। अनुमिति की भॉति परामर्श मे भी पक्ष ओर साध्य के वीच उद्देश्यविधेयभाव को प्रामाणिक माना जाय तव तो कार्यतावच्छेदकसम्वन्धविधया ओर कारणताच्छेदकसम्वन्धविधया पर्वतत्वावच्छिन्नउद्देश्यतानिरूपितविधेयतावच्छेदकता का ही ग्रहण किया जा सकता है। जैसे 'पर्वतो वह्निव्याप्यधूमवान्' यह परामर्श पर्वत को उद्देश्य बना कर वह्नि का विधान करने से पर्वतत्वावच्छिन्न उद्देश्यता से निरूपित विधेयता की, जो वह्नि मे रहती है, अवच्छेदकता का वह्नित्व मे अवगाहन करता हे। अतएव तादृशविधेयतावच्छेदकतासम्वन्ध से वह परामर्श वह्नित्व मे रह कर वहाँ पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितविधेयतावच्छेदकतासम्वन्ध से 'पर्वतो वह्निमान्' इत्याकारक अनुमिति को उत्पन्न करता हे, क्योकि वह अनुमिति भी पर्वत के उद्देश से वह्नि का विधान करती हे। इस कार्यकारणभाव का स्वीकार करने पर 'पर्वतो वह्निव्याप्यधूमवान् भूतल घटव्याप्यसयोगविशेषवत्' इत्याकारक समूहालम्वन परामर्श से 'पर्वतो घटवान् भूतल वह्निमत्'

दकतैवास्तु कार्यकारणतावच्छेदकः सम्बन्धोऽनन्तलिङ्गाद्यन्तर्भावेन हेतुत्वाकल्पनलाघवप्राच्यवात्। इत्थमपि च लिङ्गोपहितलैङ्गिकभानसाधन निर्मूलमिति चेत्? न, वह्नित्वाद्यवच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकसम्बन्धस्य तथात्वे विनिगमनाविरहादेवमप्यनन्तप-

## हेमलता

सति पर्वतत्वाद्यवच्छिन्नोद्देश्यतानिरूपितविधेयतावच्छेदकता एव अस्तु कार्यकारणतावच्छेदक =कार्यतायाः कारणतायाश्चावच्छेदक सम्बन्ध । तया च पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितविधेयतावच्छेदकतासम्बन्धेनानुमिति प्रति पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितविधेयतावच्छेदकतासम्बन्धेन परामर्शस्य कारणता। 'पर्वतो वह्निव्याप्यधूमवान् भूतल घटव्याप्यसयोगविशेषवदि'ति समूहालम्बनपरामर्शे पर्वतमुद्दिश्य वह्नेर्विधानात् भूतलमुद्दिश्य च घटस्य विधानात् स पर्वतत्वाच्छिन्नोद्देश्यतानिरूपित-विधेयतावच्छेदकतासम्बन्धेन वह्नित्वे वर्तते भूतलत्वावच्छिन्नोद्देश्यतानिरूपितविधेयतावच्छेदकतासम्बन्धेन च घटत्वे वर्तते। 'पर्वतो घटवान् भूतल वह्निमदि'तिसमूहालम्बनानुमितिस्तु पर्वतत्वाच्छिन्नोद्देश्यतानिरूपितविधेयतावच्छेदकतासम्बन्धेन घटत्वे वर्तते भूतलत्वावच्छिन्नोद्देश्यतानिरूपितविधेयतावच्छेदकतासम्बन्धेन वह्नित्वे वर्तते। इत्थ कार्य-कारणयोः वैयधिकरण्यान्नोपदर्शितपरामर्शात्तादृशानुमितिसम्भवः किन्तु 'पर्वतो वह्निमान् भूतल घटवदि'त्यनुमितिरेव सम्भवति तस्याः पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितविधेयतावच्छेदकतासम्बन्धेन वह्नित्वे भूतलत्वावच्छिन्नोद्देश्यतानिरूपितविधेयतावच्छेदकतासम्बन्धेन च घटत्वे सत्त्वात्। प्रकृतकार्यकारणभावस्वीकारे उक्तापत्तिसम्भवाभावात् परामर्शनिष्ठकारणतावच्छेदकधर्मसम्बन्धयोः अनन्तलिङ्गादिनिवेशस्यानावश्यकत्वेन अनन्तलिङ्गाद्यन्तर्भावेन हेतुत्वाकल्पनलाघवप्राच्यवात् = लिङ्गभेदप्रयुक्तकारणतानन्त्यस्याभावेनातिलाघवात्। इत्थमपि अनतिप्रसक्तलघुकार्यकारणभावसद्भावेन वैशेषिकानुयायिनामुदयनानुयायिना च लिङ्गोपहितलैङ्गिकभानसाधन निर्मूल =अबाधिततर्कोच्छलितप्रमाणलक्षणान्मूलान्निर्गतमिति चेत्?

प्रकरणकारः तन्निराकरोति-नेति। वह्नित्वावद्यच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकतासम्बन्धस्य तथात्वे = कारणतावच्छेदकत्वे विनिगमनाविरहात्।अय भावः लिङ्गप्रवेशप्रयुक्तलाघवानुरोधेन यदि अयवादिना निरुक्तकार्यकारणभावः कक्षीक्रियते तर्हि विनिगमकाभावेन वह्नित्वावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकतासम्बन्धेनानुमिति प्रति वह्नित्वावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकतासम्बन्धेन परामर्शस्य कारणत्वमपि न प्रत्याख्यातु शक्यते व्यभिचारप्रसङ्गस्योभयत्र तुल्यत्वात्। एतेन 'पर्वतो वह्निव्याप्यधूमवान् भूतल घटव्याप्यसयोगविशेषवदि'ति परामर्शात् 'पर्वतो घटवान् भूतल वह्निमदि'त्यनुमितिप्रसङ्गोऽपि प्रत्याख्यात प्रदर्शितपरामर्शस्य वह्नित्वावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकतासम्बन्धेन पर्वतत्वे सत्त्वेन आपाद्यमानाया अनुमितेश्च वह्नित्वावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकतासम्बन्धेन भूतलत्वे सत्त्वेन कार्यकारणयोः वैयधिकरण्यात्। एव

## वल्लभा

इत्याकारक अनुमिति की आपत्ति को अवकाश रहता नहीं है, क्योंकि उक्त समूहालम्बन परामर्श पर्वत के उद्देश से वह्नि का विधान करने की वजह पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितविधेयतावच्छेदकतासम्बन्ध से वह्नित्व में रहता है और 'पर्वतो घटवान् भूतल वह्निमान्' इत्याकारक अनुमिति पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितविधेयतावच्छेदकतासम्बन्ध से घटत्व मे रहती है, क्योंकि वह अनुमिति पर्वत के उद्देश से घट का विधान करती है। इस कार्यकारणभाव को मान्य करने का लाभ यह है कि उक्त कारणताशरीर मे अनन्त हेतु का प्रवेश नहीं होने से अनन्तलिङ्गभेदप्रयुक्त अनन्त भिन्न कारणता का गौरव अनावश्यक है एव लाघव का भी विप्लव होता नहीं है। इस तरह कार्यकारणभाव के स्वीकार से ही सब उपपन्न होने से और लिङ्ग का कार्यतावच्छेदक सम्बन्ध आदि के शरीर मे प्रवेश नहीं होने से लिङ्गोपहित लैङ्गिकभान को मान्य करना निर्मूल=निर्निमित्तक है। अत लाघवसहकार से लिङ्गानुपहित लैङ्गिकभान की सिद्धि होती है।

## लिङ्गोपहितलैङ्गिकभानसिद्धि विनिगमनाविरहग्रस्त

समाधान :- न, व०। जनाव! हमने बाल धूप मे पकाये नहीं हैं। आप लाघव से लिङ्गानुपहित लैङ्गिकभान की सिद्धि कर रहे है मगर विनिगमनाविरहदोष से आप मुक्त नहीं बन पाते। इसका कारण यह है कि कार्यतावच्छेदकसम्बन्धविधया एव कारणतावच्छेदकसम्बन्धविधया पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितविधेयतावच्छेदकतासम्बन्ध का ग्रहण करना या वह्नित्वावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकतासम्बन्ध का ग्रहण करना? इस विषय मे कोई एकतरपक्षपाती तर्क अविद्यमान है। अर्थात् पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितविधेयतावच्छेदकतासम्बन्ध से अनुमिति के प्रति पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितविधेयतावच्छेदकतासम्बन्ध से परामर्श को कारण मानना या वह्नित्वावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकतासम्बन्ध से अनुमिति के प्रति वह्नित्वावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकतासम्बन्ध से परामर्श को कारण करना? इस विषय मे कोई निर्णायक युक्ति नहीं है। इस कार्यकारणभाव के स्वीकार मे गौरव भी नहीं है, क्योंकि प्रकृत कार्यकारणभावशरीर मे अनन्त पक्ष का अन्तर्भाव नहीं होने से अनन्तपक्षभेदप्रयुक्त अनन्त भिन्न कारणता की कल्पना अनावश्यक है। इसलिए लाघव का विलय तो इस पक्ष मे भी अबाधित है। एव 'पर्वतो वह्निव्याप्यधूमवान् भूतल घटव्याप्यसयोगविशेषवत्' इस समूहालम्बन परामर्श से 'पर्वतो घटवान् भूतल वह्निमत्' इत्याकारक अनुमिति की आपत्ति को भी अवकाश रहता नहीं है, क्योंकि वह्नित्वावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकता सम्बन्ध से उपर्युक्त परामर्श पर्वतत्व मे रहता है जब कि आपादित अनुमिति तादृश सम्बन्ध से भूतलत्व मे रहती है। कार्य और

क्षान्तर्भावेन हेतुत्वाकल्पनलाघवाप्रच्यवादिति।

यत्तु ''धूमपरामर्शादीना विजातीयानुमितावेव हेतुत्वान्न तत्सिद्धिरिति'' तच्चिन्त्यम् धूमपरामर्शजन्यतावच्छेदकालोकपरामर्श-

◆ हेमलता ◆

प्रोक्तपरामर्शस्य घटत्वावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकतासम्बन्धेन पर्वतत्वे सत्त्वेन तयोः वैयधिकरण्यान्नोक्तपरामर्शादुपदर्शितानुमित्यापत्ति-सम्भवः। न चैव 'वह्निर्न काञ्चनमय' इतिबाधकालेऽपि 'पर्वतः काञ्चनमयवह्निव्याप्यधूमवानि'ति परामर्शादनुमित्यापत्तिरिति वाच्यम् तदानीं शुद्धवह्नित्वावच्छिन्नविधेयता- निरूपितोद्देश्यतावच्छेदकतासम्बन्धेन पर्वतत्वे 'पर्वतो वह्निमानि'त्यनुमितेरिष्टत्वात्। तदानी काञ्चनमयवह्नित्वेनानुमितिस्तु न सम्भवति, पर्वतत्वनिष्ठावच्छेदकतानिरूपकोद्देश्यतानिरूपितविधेयतानिरूपितावच्छेदकत्ववतो विधेये बाधेन पर्वतत्वावच्छिन्नोद्देश्यतायाः काञ्चनमयवह्नि-त्वानवच्छिन्नतया तादृशपरामर्शस्य काञ्चनमयवह्नित्वावच्छिन्न - विधेयतानिरूपितोद्देश्यतावच्छेदकतया पर्वतत्वे विरहात्। एवमपि = वह्नित्वावच्छिन्नविधेय-तानिरूपितोद्देश्यतावच्छेदकतासंसर्गेणानुमितिपरामर्शयोः कार्यकारणभावस्वीकारेऽपि व्यभिचारायोगेन कारणतावच्छेदकसम्बन्धे अनन्तपक्षान्तर्भावेन हेतुत्वाकल्पनलाघवाऽप्रच्यवात्। एतत्कल्पे धूमलिङ्गकत्वादेः कार्यतावच्छेदकसम्बन्धधर्मयोरप्रवेशेन लिङ्गोपहितलैङ्गिकभानसिद्धिविरहेऽपि गुरुचरणमतानु-सारिणा अथवादिना यदत्रोक्त तन्न घटाकोटिमटाट्यत इत्येवात्र प्रकरणकृतस्तात्पर्यमिति ध्येयम्।

यदि च पक्षसाध्ययोरुद्देश्यविधेयभावोऽनुमितावेवोपेयते न तु परामर्शे, तत्र पक्षहेत्वोरेवोद्देश्यविधेयभावस्वीकारादित्युच्यते तदा तु नितरामथवादिमतस्याऽश्रद्धेयत्वमित्यवधेयम्।

लिङ्गानुपहितलैङ्गिकभानवादिनामपरेषा मत दर्शयति- यत्तु इति। तच्चिन्त्यमित्यनेनास्यान्वयः, यत्तदोर्नित्यसम्बन्धात्। धूमपरामर्शादीना आदिपदेनालोकपरामर्शादीना परिग्रहः। विजातीयानुमितावेव न तु पर्वतोद्देश्यकवह्निविधेयकानुमितित्वावच्छिन्ने, हेतुत्वात् = कारणत्वकल्पनात् न तत्सिद्धि = लिङ्गोपहितलैङ्गिभानसिद्धिः। धूमलिङ्गकपरामर्शजन्यतावच्छेदकाद्वैजात्यादन्यदेव वैजात्यमालोकलिङ्गकपरामर्शजन्यतावच्छेदकम्। एतेन आलोकपरामर्शजन्यदहनानुमितेर्धूमपरामर्शाद्विना धूमपरामर्शजन्यदहनानुमितेश्चालोकपरामर्शमृते जायमानत्वेन व्यतिरेकव्यभिचारप्रसक्त्या धूमपरामर्शात् 'वह्निव्याप्यधूमवान् पर्वतो वह्निमान्'इत्यनुमितेः आलोकपरामर्शाच्च 'वह्निव्याप्यालोकवान् पर्वतो वह्निमान्' इत्यनुमितेः सिद्धान्तसिद्धत्वेन लिङ्गोपहितलैङ्गिकभानसिद्धिरिति निरस्तम् पर्वतोद्देश्यकवह्निविधेयकानुमितित्वावच्छिन्ने धूमपरामर्शस्यालोकपरामर्शस्य वा कारणत्वानुपगमात्। एतेन व्यतिरेकव्यभिचारः प्रत्युक्त सामग्र्याः कार्यतावच्छेदकावच्छिन्नस्योपधानादिति यत्तुमताशयः।

स्वास्वरसावेदनाय प्रकरणकृदत्राह-तच्चिन्त्यमिति। धूमपरामर्शजन्यतावच्छेदकालोकपरामर्शजन्यतावच्छेदकजात्यो उभयपरामर्शजन्यानुमितौ =

► वल्लभा ◄

कारण परस्पर व्यधिकरण होने पर कार्य का कैसे आपादन हो सकता है? इस तरह लिङ्गोपहित लैङ्गिकभानवादी के मत मे विनिगमनाविरह दोष वज्रलेप वनता है।

### ► लिङ्गानुपहितलैङ्गिकभान मे अन्य मत ◄

यत्तु०। यहाँ कुछ विद्वानो का यह कथन है कि—>'धूमलिङ्गक परामर्श आदि विजातीय अनुमिति मे ही कारण होने से लिङ्गोपहित लैङ्गिकभान की सिद्धि हो सकती नही है। आशय यह है कि 'पर्वतो वह्निव्याप्यधूमवान्' इस परामर्श से जो अनुमिति होती है वह आलोकपरामर्शजन्य अनुमिति से विजातीय है और 'पर्वतो वह्निव्याप्यआलोकवान्' इस परामर्श से जो वह्निविधेयक अनुमिति होती है वह धूमपरामर्शजन्य अनुमिति से विजातीय है। भिन्न भिन्न कार्यतावच्छेदक से अवच्छिन्न=विशिष्ट का जनक होने से आलोकपरामर्शजन्य वह्निसाध्यक अनुमिति का धूमपरामर्श के विना एव धूमपरामर्शजन्य वह्निविधेयक अनुमिति का आलोकपरामर्श के विना उदय होने पर भी व्यतिरेक व्यभिचार को अवकाश रहता नही है। तब क्यो ''धूमपरामर्श से 'वह्निव्याप्यधूमवान् पर्वतो वह्निमान्' इत्याकारक अनुमिति होती हे एव आलोकपरामर्श से 'वह्निव्याप्यालोकवान् पर्वतो वह्निमान्' इत्याकारक अनुमिति होती है'' इस तथ्यहीन मान्यता का स्वीकार किया जाय? इसलिए लिङ्गोपहित लैङ्गिकभान का स्वीकार नही किया जा सकता'←

### ■■ विजातीयअनुमितिपक्ष मे साङ्कर्य-गौरवादिदूषण ■■

तच्चि०। मगर उपर्युक्त वक्तव्य विचारणीय है न कि विना विचार के उपादेय। इसका कारण यह है कि धूमपरामर्शजन्यतावच्छेदक वैजात्य आलोकपरामर्शजन्य अनुमिति मे रहता नही है एव आलोकपरामर्शजन्यतावच्छेदक वैजात्य=जातिविशेष धूमपरामर्शजन्य अनुमिति मे रहता नही है मगर परस्पर व्यधिकरण ये दो वैजात्य धूमालोकोभयलिङ्गकपरामर्शजन्य अनुमिति मे रहते है। इसलिए साकर्य दोष की आपत्ति आयेगी। परस्पर व्यधिकरण दो धर्मों का एकत्र समावेश होना ही सकरलक्षण है। यदि प्रत्येकपरामर्शजन्यतावच्छेदक वैजात्य से अतिरिक्त उभयपरामर्शजन्यतावच्छेदक जातिविशेष का स्वीकार किया जाय तव यद्यपि उपर्युक्त साकर्य दोष को अवकाश नही होगा मगर धूमालोकोभयपरामर्श होने पर उभयपरामर्शजन्य अनुमिति की भाँति धूमपरामर्शजन्य एव आलोकपरामर्शजन्य दहनानुमिति की आपत्ति

जन्यतावच्छेदकजात्योरुभयपरामर्शजन्यानुमितौ साङ्कर्यात्, उभयपरामर्शजन्यतावच्छेदकजातेरतिरेके चोभयपरामर्शसत्त्वे प्रत्येकपरामर्शजन्यानुमितिप्रसङ्गात्, तत्र किञ्चित्प्रतिबन्धकादिकल्पने च गौरवात्।

विजातीयानुमितौ विजातीयपरामर्शस्य हेतुत्वात् पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नविधेयताकानुमितौ तादृशपरामर्शत्वेन हेतुत्वाद्वा न तत्सिद्धिरिति युक्तः पन्थाः।

## ◆ हेमलता ◆

धूमालोकोभयलिङ्गकपरामर्शजन्यदहनानुमितौ साङ्कर्यात्। अयमाशयः 'पर्वतो वह्निव्याप्यधूमवान्' इति परामर्शजन्यानुमितावालोकपरामर्शजन्यतावच्छेदक नास्ति 'पर्वतो वह्निव्याप्यालोकवान्' इति परामर्शजन्यानुमितौ धूमपरामर्शजन्यतावच्छेदक नास्ति। तदुभयोः 'वह्निव्याप्यालोकवान् पर्वतो वह्निव्याप्यधूमवान्' इति परामर्शजन्यानुमितौ सत्त्वेन साङ्कर्यम्, परस्परात्यन्ताभावसमानाधिकरणयोस्तयोरेकत्र समावेशात्। न च धूमालोकोभयलिङ्गकपरामर्शजन्यतावच्छेदक वैजात्य तदुभयव्यतिरिक्तमेवेति वक्तव्यम् उभयपरामर्शजन्यतावच्छेदकजाते = धूमालोकोभयलिङ्गकपरामर्शजन्यमात्रवृत्तिवैजात्यस्य अतिरेके =धूमपरामर्शजन्यतावच्छेदकालोकपरामर्शजन्यतावच्छेदकजातिद्वयव्यतिरेकोपगमे च गौरवात् उभयपरामर्शसत्त्वे = धूमालोकोभयलिङ्गकपरामर्शकाले प्रत्येकपरामर्शजन्यानुमितिप्रसङ्गात् = धूमपरामर्शजन्यतावच्छेदकाक्रान्ताया आलोकपरामर्शकार्यतावच्छेदकालिङ्गिताया‌श्चानुमितेरुत्पत्तेः, सामग्र्या स्वकार्यजनने‌ऽन्यानपेक्षणात्। ततश्च तदाऽनुमितित्रितयप्रसङ्ग इति भावः। न च प्रत्येकपरामर्शजन्यानुमितौ उभयपरामर्शजन्यस्य प्रतिबन्धकत्वान्नाय दोष इति वाच्यम् तत्र = प्रत्येकपरामर्शजानुमितौ, किञ्चित्प्रतिबन्धकादिकल्पने = उभयपरामर्शनिष्ठप्रतिबन्धकत्वतदभावनिष्ठकारणत्वकल्पनाया च गौरवात् = अप्रामाणिकगौरवात्, प्रमाणप्रवृत्तिपूर्वमेव तदुपस्थितेः। एतेन तस्य फलमुखत्वकल्पनाऽपि परास्ता।

केचित्तु धूमलिङ्गकपरामर्शमात्रजन्यानुमिति प्रति आलोकलिङ्गकपरामर्शस्यालोकलिङ्गकपरामर्शमात्रजन्यानुमिति प्रति धूमलिङ्गकपरामर्शस्य प्रतिबन्धकत्व कल्प्यत इति प्रतिबन्धकसद्भावान्न प्रत्येकलिङ्गकपरामर्शजन्यानुमितिप्रसङ्ग इति कल्पयन्ति।

विजातीयानुमितौ = अनुमितिविशेषनिष्ठवैजात्यावच्छिन्न प्रति विजातीयपरामर्शस्य हेतुत्वात् = कारणत्वस्वीकारात् न तत्सिद्धिरित्यनेनास्यान्वयः। धूमलिङ्गकपरामर्शालोकलिङ्गकपरामर्शयोरनुगतैकवैजात्य, तदवच्छिन्नस्य विजातीयानुमितिकारणत्वम्। एतेनालोकपरामर्शमृते‌ऽनलानुमितेर्धूमलिङ्गकपरामर्शादुत्पादेन धूमपरामर्शाद्विना च दहनानुमितेरालोकपरामर्शादुत्पत्तेर्व्यतिरेकव्यभिचार इत्यपि प्रत्युक्तम् तादृशानुमितेः स्वकारणतावच्छेदकावच्छिन्नादेवोत्पत्तेः। न हि कारणतावच्छेदकावच्छिन्नस्य सर्वस्यापेक्षा कार्योत्पत्तौ भवितुमर्हति। अत्र कार्यतावच्छेदककोटौ धूमलिङ्गकत्वादेरनिवेशान्न लिङ्गोपहितलैङ्गिकभानसिद्धिरित्यभिप्रायः। प्रकृते वैजात्यद्वयकल्पनागौरवात् प्रकरणकार श्रीमान् कल्पान्तरमाह- पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नविधेयताकानुमितौ = पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नविधेयताकानुमितित्वावच्छिन्न प्रति तादृशपरामर्शत्वेन = पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नविधेयताकपरामर्शत्वेन हेतुत्वात् = कारणत्वोपगमात् वा न तत्सिद्धि = लिङ्गोपहितलैङ्गिकभानसिद्धिः, लिङ्गस्य कार्यतावच्छेदकादावप्रवेशात्। न चालोकपरामर्शजन्यानुमितेः धूमपरामर्शाद्विनाऽप्युत्पादेन व्यभिचार इति वक्तव्यम् पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नविधेयताक-परामर्शस्योत्पन्नानलानुमितिकारणतावच्छेदकावच्छिन्नत्वात्। न च 'पर्वतो वह्निव्याप्यधूमवान् भूतल घटव्याप्यसयोगविशेषवत्' इति समूहालम्बनपरामर्शात् 'पर्वतो घटवान् भूतल वह्निमत्' इत्यनुमित्युत्पत्तिप्रसङ्ग इति वाच्यम् तादृशपरामर्शीयवह्नित्वावच्छिन्नविधेयतानिरूपकोद्देश्यताया पर्वतत्वावच्छिन्नत्वेन पर्वतत्वावच्छिन्नविशेष्यतानिरूपितघटत्वावच्छिन्नविधेयताकानुमितेस्ततोऽनापाद्यत्वात्। न ह्यापादकमृते आपादन भवितुमर्हति। अतो न लिङ्गोपहितलैङ्गिकभानसिद्धिरिति युक्त =युक्तिसङ्गत पन्था।

## ► वल्लभा ◄

आयेगी, क्योंकि उभयलिङ्गक परामर्श होने पर प्रत्येकलिङ्गक परामर्श होता ही है। यदि इस आपत्ति के निवारणार्थ यह कहा जाय कि→'प्रत्येकलिङ्गकपरामर्शजन्य अनुमिति के प्रति उभयलिङ्गक परामर्श प्रतिबन्धक होने से धूमालोकोभयलिङ्गक परामर्श की उपस्थिति में केवल धूमलिङ्गकपरामर्शजन्य या केवल आलोकलिङ्गकपरामर्शजन्य अनुमिति की आपत्ति को अवकाश नहीं है, क्योंकि प्रतिबन्धकाभावात्मक कारण तब अविद्यमान रहता है।'←तो यह भी गलत है, क्योंकि प्रत्येकलिङ्गक-परामर्शजन्य दहनानुमिति के प्रति तादृश प्रतिबन्धकादि की कल्पना करने में अप्रामाणिक महागौरव है।

विजा०। प्रकरणकार इस विषय में अपने अभिप्राय को प्रकट करने के लिए कहते हैं कि उपदर्शित प्रतिबन्धकादि की कल्पना करने की अपेक्षा समाधान का सही राह तो यह है कि विजातीयअनुमिति के प्रति विजातीय परामर्श को ही हेतु माना जाय अर्थात् धूमपरामर्श और आलोकपरामर्श में एक अनुगत वैजात्य की कल्पना कर के पर्वतविशेष्यक-वह्निविधेयकानुमिति के प्रति विजातीयपरामर्शत्वेन

एतेन विशेष्यतावच्छेदकतासम्बन्धेन वह्निव्याप्यधूमविशिष्टे वैशिष्ट्यज्ञान प्रत्येव वह्निव्याप्यधूमत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपितप्रकारतासम्बन्धेन निश्चयत्वेन हेतुता, न तु परामर्शानुमित्योः पृथक्कार्यकारणभावः। न चैव 'वह्निव्याप्यधूमवत्पर्वतो

◆ हेमलता ◆

एतेनेति। निरुक्तकार्यकारणभावस्वीकारेणेति। अस्य निरस्तमित्यनेनान्वयः। एकविशिष्टेऽपरवैशिष्ट्यमिति न्यायेन लिङ्गोपहितलैङ्गिकभानसाधनमावेदयति-विशेष्यतावच्छेदकसम्बन्धेनेति। स्वनिष्ठविशेष्यिताऽभिधानविषयितानिरूपितविशेष्यताख्यविषयतानिरूपितावच्छेदकत्वससर्गेणेति। अनेन कार्यतावच्छेदकसम्बन्धः प्रदर्शितः। कार्यतावच्छेदकधर्मश्च वह्निव्याप्यधूमविशिष्टत्वावच्छिन्नविशेष्यतानिरूपिताऽपरप्रकारताकज्ञानत्वम्। 'वह्निव्याप्यधूमवान् पर्वत' इति निश्चये वह्निव्याप्यधूमस्य प्रकारत्व पर्वतस्य च तद्विशेष्यत्वम्। पर्वते धूमस्येव पर्वतत्वस्याऽपि प्रकारत्वेनोक्तपरामर्शात्मकनिश्चयः वह्निव्याप्यधूमत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपितप्रकारतासम्बन्धेन धूमे पर्वतत्वे च वर्तते। यदि च अनुमितौ धूमावगाहन स्यात्तदोक्तकार्यकारणभावबलादेव तदुपपत्तिः, तस्या वह्निव्याप्यधूमविशिष्टे पर्वते वह्निवैशिष्ट्यावगाहित्वेन निश्चयकार्यतावच्छेदकाक्रान्तत्वात्, स्वनिरूपितविशेष्यातावच्छेदकतासम्बन्धेन पर्वतत्वे धूमे च तदुत्पत्तेर्निरपायत्वात्। एतादृशकार्यकारणभावादेवोपपत्तौ न परामर्शानुमित्यो पृथक्कार्यकारणभाव कल्प्यते। यदि चानुमितो धूमावगाहन न स्यात्तदा 'पर्वतो वह्निमानि'त्यनुमितिनिष्ठप्रकारितानिरूपितप्रकारताया वह्निव्याप्यधूमविशिष्टत्वावच्छिन्नविशेष्यताऽनिरूपकत्वेन तादृशानुमितेः निरुक्तकार्यतावच्छेदकानाक्रान्तत्वेनाकस्मिकत्वापत्तिनिवारणकृते परामर्शानुमित्योः पृथक्कार्यकारणभाव' कल्पनीयस्स्यादिति लिङ्गोपहितलैङ्गिकभानपक्षे गौरव प्रसज्येतेत्याशयः।

न च एव = एकविशिष्टेऽपरवैशिष्ट्यमितिन्यायेनोक्तकार्यकारणभावाभ्युपगमे 'पर्वतो वह्निव्याप्यधूमवानि'ति निश्चयात् 'वह्निव्याप्यधूमत्पर्वतो

► वल्लभा ◄

कारणता की कल्पना की जाय। धूमपरामर्श के विना आलोकपरामर्श से उत्पन्न दहनअनुमिति भी स्वकारणतावच्छेदकाच्छिन्न के विना उदित हुई नही है। इसलिए व्यतिरेक व्यभिचार को भी अवकाश नही रहेगा। अथवा विजातीयपरामर्श के कार्यतावच्छेदकविधया पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नविधेयताकानुमितित्व का स्वीकार करने पर भी व्यभिचारनिवारण हो सकता है और धूमलिङ्गकत्व का उसमे प्रवेश नही होने से लिङ्गोपहित लैङ्गिकभान की सिद्धि को अवकाश भी नही रहेगा। लिङ्गानुपहित लैङ्गिकभान के समर्थन का यह युक्तिसगत मार्ग है।

## ★♦ लाघव से लिङ्गोपहितलैङ्गिकभानसिद्धि-पूर्वपक्ष ♦★

**लिङ्गोपहितलैङ्गिकभानवादी : एतेन०।** —>'विशेष्यतावच्छेदकतासम्बन्ध से वह्निव्याप्यधूमविशिष्ट मे विशिष्टत्वावगाही ज्ञान के प्रति ही वह्निव्याप्यधूमत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपित प्रकारता सम्बन्ध से निश्चयत्वेन रूपेण कारणता होती है। मगर परामर्श और अनुमिति के बीच स्वतत्र कार्यकारणभाव के स्वीकार की कोई आवश्यकता नही है। आशय यह हे कि 'पर्वतो वह्निव्याप्यधूमवान्' इत्याकारक परामर्श से यदि 'वह्निव्याप्यधूमवान् पर्वतो वह्निमान्' इत्याकारक अनुमिति का स्वीकार किया जाय तव यह अनुमिति वह्निव्याप्यधूमविशिष्ट पर्वत मे वह्निवैशिष्ट्यागाही होने की वजह निश्चयकार्यतावच्छेदकाक्रान्त होती है जो विशेष्यतावच्छेदकतासम्बन्ध से वह्निव्याप्यधूम एव पर्वतत्व मे उत्पन्न होगी, क्योकि उस अनुमिति के विशेष्यतावच्छेदक वह्निव्याप्यधूम एव पर्वतत्व है। तथा 'पर्वतो वह्निव्याप्यधूमवान्' इस परामर्श मे पर्वतात्मक विशेष्य के प्रकार पर्वतत्व एव वह्निव्याप्यधूम होने से वह्निव्याप्यधूमत्वावच्छिन्न प्रकारता से निरूपित पर्वतनिष्ठ विशेष्यता का प्रकार पर्वतत्व एव वह्निव्याप्यधूम होगा। अतएव वह्निव्याप्यधूमत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपितप्रकारतासम्बन्ध से 'पर्वतो वह्निव्याप्यधूमवान्' यह निश्चय पर्वतत्व एव वह्निव्याप्यधूम मे रहता हे। इस तरह कार्य और कारण समान अधिकरण मे रहने से उन दोनो के बीच सामानाधिकरण्य भी उपपन्न हो सकता है। उपर्युक्त रीति से एकविशिष्ट मे अपरविशेषणवैशिष्ट्यावगाही ज्ञान के प्रति जो कारण होता है उसीको लिङ्गोपहित लेङ्गिकभान का कारण मानने से सब सगत हो जाता है तव अनुमिति ओर परामर्श के वीच क्यो स्वतन्त्र कार्यकारणभाव की कल्पना की जाय? इस तरह लिङ्गोपहित लैङ्गिकभान के स्वीकार मे लाघव है। यदि लिङ्गोपहित लेङ्गिकभान का स्वीकार न किया जाय तव धूमपरामर्श से होनेवाली अनुमिति 'पर्वतो वह्निमान्' इत्याकारक होगी जो एकविशेषणविशिष्ट मे अन्यविशेषणवैशिष्ट्यावगाही न होने से उक्त सम्बन्ध से निश्चय की कारणता से निरूपित कार्यता के अवच्छेदक धर्म से आक्रान्त नही होगी। जिसकी वजह उसमे आकस्मिकता के परिहारार्थ परामर्श मे पृथक् अनुमितिकारणता की कल्पना करने का गौरव होगा।

**न चैव०।** यहाँ इस शका का कि—>'व्यापकवैशिष्ट्य का कार्यतावच्छेदकधर्मशरीर मे निवेश न कर के केवल अन्यविशेषणवैशिष्ट्य का ही उसमे पवेश किया जाय और तादृशकार्यतावच्छेदकावच्छिन्न के पति प्रदर्शित सम्वन्ध से निश्चय को कारण माना जाय तव

घटवानि'त्यनुमित्यापत्तिः, पक्षतादिजन्यतावच्छेदक-पर्वतपक्षक-घटानुमितित्वस्य घटव्याप्यविशिष्टपर्वतविशेष्यकत्वनियतत्वेन सामग्रीं विना कार्यानुत्पत्तेः। न च गृहीतैकसम्बन्धावच्छिन्नव्याप्तिकस्य धूमादेरन्यसम्बन्धेन पक्षे निश्चयाद्विशिष्टबुद्धिवदनुमित्यापत्तिः,

◆ हेमलता ◆

वह्निमानि'तिवत् 'वह्निव्याप्यधूमवत्पर्वतो घटवानि'त्यनुमित्यापत्ति विशेष्यतावच्छेदकतया कार्यतावच्छेदकाक्रान्ततादृशानुमित्यधिकरणीभूते वह्निव्याप्यधूमे पर्वतत्वे च वह्निव्याप्यधूमत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपितप्रकारतासम्बन्धेन निश्चयस्य सत्त्वादिति वक्तव्यम्, अनुमितित्वस्य निरुक्तनिश्चय-कार्यतावच्छेदकत्वानुपगमेन तदापादनासम्भवात्, प्रदर्शितपर्वतपक्षक - घटविधेयकानुमितित्वस्य तु सिषाधयिषाविरह - विशिष्टपर्वतविशेष्यकघटप्रकारकनि-याभावलक्षणपक्षतानिष्ठकारणतानिरूपितकार्यतावच्छेदकत्वेन घटव्याप्यप्रकारक-पर्वतविशेष्यकनिश्चयजन्यज्ञानत्वव्याप्यत्वात् पर्वतपक्षकघटानुमितिसा-मग्र्याः घटव्याप्यत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताकनिश्चयव्याप्यत्वम्। इत्थञ्च पक्षतादिजन्यतावच्छेदकपर्वतपक्षक-घटानुमितित्वस्य घटव्याप्यविशिष्टपर्वतविशेष्यकत्वनियतत्वेन = घटव्याप्यविशिष्टपर्वतत्वावच्छिन्न- विशेष्यताकत्वव्याप्यत्वेन 'घटव्याप्यवान् पर्वत' इतिनिश्चयरूपा सामग्रीं विना 'वह्निव्याप्यधूमवान् पर्वत' इतिनिश्चयात् कार्यानुत्पत्ते = 'वह्निव्याप्यधूमवत्पर्वतो घटवानि'त्यनुमितिलक्षणविवक्षितकार्योत्पादाऽसम्भवात्, व्यापकाभावस्यव्याप्याभावसाधकत्वात्। न हि व्यापकधर्मावच्छिन्नसामग्रीविरहिताया व्याप्यधर्मावच्छिन्नसामग्र्याः स्वकार्यार्जने सामर्थ्यं क्वापि दृष्टचरम्। यदि च 'पर्वतो घटव्याप्यसयोगविशेषवानि'ति निश्चयस्स्यात्तदा तदुत्तर 'घटव्याप्यसयोगविशेषवान् पर्वतो घटवानि'त्यनुमितिरेवोपजायेत पर्वतपक्षक-घटानुमितित्वस्य घटव्याप्यविशिष्टपर्वतविशेष्यकत्वव्याप्यत्वात्। ततो न 'वह्निव्याप्यधूमवान् पर्वतो घटवानि'त्यनुमितेः 'पर्वतो वह्निव्याप्यधूमवा-नि'तिनिश्चयादुत्पत्तिप्रसङ्गः।

न च गृहीतैकसम्बन्धावच्छिन्नव्याप्तिकस्य = ज्ञातसयोगसम्बन्धावच्छिन्नव्याप्यत्वकस्य धूमादे अन्यसम्बन्धेन = कालिकादिसंसर्गेण पक्षे ह्रदादौ निश्चयात् = 'ह्रदः कालिकेन वह्निव्याप्यधूमवानि'त्यादिस्वरूपात् निश्चयात् विशिष्टबुद्धिवदनुमित्यापत्ति = वह्निव्याप्यधूमे ह्रदत्वे च विशेष्यतावच्छेदकतासम्बन्धेन वह्निव्याप्यधूमविशिष्टत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताकानुमितिप्रसङ्गः, वह्निव्याप्यधूमत्वावच्छिन्नप्र-कारतानिरूपितविशेष्यतानिरूपितप्रकारतासम्बन्धेनोक्तनिश्चयस्य वह्निव्याप्यधूमे ह्रदत्वे च सत्त्वादिति वाच्यम् येन सम्बन्धेन य प्रति यस्य व्याप्यत्व

▶ वल्लभा ◀

तो 'पर्वतो वह्निव्याप्यधूमवान्' इस परामर्श से 'वह्निव्याप्यधूमवान् पर्वतो घटवान्' इत्याकारक अनुमिति के उदय की आपत्ति आयेगी, क्योंकि वह्निव्याप्यधूमत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपित प्रकारता सम्बन्ध से वह निश्चयात्मक परामर्श पर्वतत्व एव वह्निव्याप्यधूम मे रहता है ओर आपाद्यमान अनुमिति भी विशेष्यतावच्छेदकतासम्बन्ध से उन दोनो मे ही रहेगी न कि अन्यत्र, जिसकी बदौलत कार्य और कारण मे वैयधिकरण्य प्रसक्त हो'←निराकरण इसलिए हो जाता है कि आपाद्यमान अनुमिति मे पर्वतपक्षक-घटानुमितित्व रहता है जो पक्षतादि का कार्यतावच्छेदक होता है एव घटव्याप्यविशिष्टपर्वतविशेष्यकत्व का व्याप्य होता है, क्योंकि जिस जिस ज्ञान मे पर्वतपक्षक-घटानुमितित्व रहता हे उस उस ज्ञान मे घटव्याप्यविशिष्टपर्वतविशेष्यकत्व होता ही है। प्रस्तुत मे आपाद्यमान अनुमिति घटव्याप्यविशिष्ट-पर्वतविशेष्यक नही है किन्तु वह्निव्याप्यधूमविशिष्टपर्वतविशेष्यक है, क्योंकि वह 'वह्निव्याप्यधूमवान् पर्वतो घटवान्' इत्याकारक है। मतलब कि आपाद्यमान अनुमिति मे व्यापक नहीं है। व्यापकाभाव व्याप्याभाव का साधक होने से वह अनुमिति पर्वतपक्षक होते हुए घटविधेयक (=घटसाध्यक) हो सकती नही है। व्यापकधर्मावच्छिन्न की सामग्री के विरह मे व्याप्यधर्मावच्छिन्नसामग्री से कार्य की उत्पत्ति होती नही है। इसलिए 'पर्वतो वह्निव्याप्यधूमवान्' इस परामर्श से 'वह्निव्याप्यधूमवान् पर्वतो घटवान्' इत्याकारक अनुमिति की आपत्ति को अवकाश नहीं है।

न च गृ। यहाँ इस शका का कि→'एकविशिष्ट मे अपरविशेषणवैशिष्ट्यावगाही ज्ञान के प्रति उक्त सम्बन्ध से निश्चयत्वेन रूपेण कारणता का स्वीकार करने पर व्याप्यतावच्छेदकविधया एक सम्बन्ध का ज्ञान होने पर तदन्य सम्बन्ध से पक्ष मे व्याप्य का निश्चय होने पर भी विशिष्टबुद्धिवाली अनुमिति की आपत्ति आयेगी। जैसे धूम मे सयोगसम्बन्ध से वह्निव्याप्यत्व का भान करनेवाले पुरुष को पर्वत मे कालिकविशेषणतासम्बन्ध से धूम का निश्चय होने पर भी 'वह्निव्याप्यधूमवान् पर्वतो वह्निमान्' इत्याकारक अनुमिति होने लगेगी, क्योंकि वह्निव्याप्यधूमत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपित प्रकारता सम्बन्ध से वह निश्चय पर्वतत्व एव वह्निव्याप्यधूम मे रहता है और उत्पन्न होनेवाली 'वह्निव्याप्यधूमवान् पर्वतो वह्निमान्' इत्याकारक अनुमिति भी स्वीयविशेष्यतावच्छेदकतासम्बन्ध से वह्निव्याप्यधूम एव पर्वतत्व मे रहेगी'←समाधान यह हे कि जिस सम्बन्ध से जिसके (=व्यापक के) प्रति जिस सम्बन्ध से जो व्याप्य होता हे उसी सम्बन्ध (=व्याप्यतावच्छेदकसम्बन्ध) से पक्ष मे उसका (=व्याप्य का) निश्चय अनुमिति का जनक होने से प्रस्तुत मे व्याप्यतानवच्छेदकसम्बन्ध से पक्ष (=पर्वत) मे व्याप्य (=धूम) का निश्चय अनुमिति का जनक नही होने से अनुमितिसामान्य की सामग्री ही नही है तब दहनविधेयक अनुमितिविशेष का जन्म केसे हो सकता? सामान्यसामग्री के विरह मे कार्यविशेष की उत्पत्ति होती नही हे। सयोगसम्बन्ध से वह्नि के प्रति सयोग सम्बन्ध से धूम व्याप्य होने से कालिकविशेषणता सम्बन्ध से, जो वह्निनिरूपित-धूमनिष्ठव्यापिता का अनवच्छेदकसम्बन्ध है, पर्वतादि मे धूम का निश्चय दहनानुमिति का जनक हो सकता नहीं हे - यह हकिकत सुगम है। इस तरह लिङ्गोपहित लैङ्गिकभान

तन्निश्चयस्यानुमित्यजनकत्वेन सामान्यसामग्रीत्वाभावात्'' इति निरस्तम्। लिङ्गविषयकत्वे बाधके लिङ्गाऽविषयकानुमितेस्त्वयाऽपि स्वीकारात्तत्र च परामर्शानुमित्योः पृथक्कार्यकारणभावावश्यकत्वात्।

लिङ्गविषयकानुमितौ मम पृथक्कारणत्वाकल्पनया लाघवमिति चेत्? न उक्तरीत्योभयत्रैकरूपेणैव हेतुत्वात्।

◆ हेमलता ◆

गृहीत तेनैव सम्बन्धेन व्याप्यवत्तानिश्चयात्मकात् परामर्शात् तेन सम्बन्धेन व्यापकानुमितेरभ्युपगमेन तन्निश्चयस्य व्याप्यतावच्छेदकतया गृहीतसम्बन्धभिन्नसम्बन्धव्याप्यनिश्चयस्य अनुमित्यजनकत्वेन सामान्यसामग्रीत्वाभावात् = अनुमितिसामान्यनिरूपितकारणतावच्छेदकानाक्रान्तत्वात् न ततोऽनुमित्यापत्तिः। प्रकृते च कालिकादिसम्बन्धेन ह्रदे धूमनिश्चयस्य अनुमित्यजनकत्वेन=सयोगसम्बन्धावच्छिन्न-धूमत्वावच्छिन्नव्याप्यतानिरूपित-सयोगसम्बन्धावच्छिन्न-वह्नित्वावच्छिन्नव्यापकताकानुमितिजनकत्वविरहेण न ततो दहनानुमित्यापत्तिः सामान्यसामग्र्या विरहे कार्यविशेषोत्पादाऽयोगात्, प्रकृते च विशेषसामग्र्या अपि विरह इति ध्येयम्। इत्थश्च विशिष्टानुयोगिकवैशिष्ट्य-बोधस्थलीयमर्यादयैव लाघवेन लिङ्गोपहितलैङ्गिकभानसिद्धिरिति पूर्वपक्षाभिप्रायः।

मूलशैथिल्यप्रदर्शनेनैतत्पूर्वपक्ष प्रकरणकारो दूषयति- लिङ्गविषयकत्वे बाधके सति=पक्षेऽलौकिकसन्निकर्षजन्यहेत्वभावनिश्चयदशाया हेत्वशे लौकिकपरामर्शात् पक्षे लिङ्गाविषयकानुमिते = लिङ्गानुपहितलैङ्गिकानुमितेः त्वया = लिङ्गोपहितलैङ्गिकभानवादिना अपि स्वीकारात् अन्यथा तदानी पक्षे हेत्वशे लौकिकपरामर्शाद् द्वितीयक्षणेऽनुमित्यनापत्तिः पूर्वमेवोक्ता। तत्र च = लैङ्गिकानुमितेः व्याप्यविशिष्टेऽपरविशेषण-वैशिष्ट्यानवगाहित्वेनाभिमतनिश्चयकार्यतावच्छेदकधर्मानाक्रान्ततया परामर्शानुमित्यो पृथक्कार्यकारणभावावश्यकत्वात् अन्यथोदर्शितलिङ्गानुपहितलैङ्गिकानु-मितेराकस्मिकत्वापातात्। तथा च सति तस्या नित्य सत्त्वमसत्त्व वा प्रसज्येत। ततो न परामर्शानुमित्योः स्वतन्त्रकार्यकारणभावाऽकल्पनालाघवेन लिङ्गोपहितलैङ्गिकभानसिद्धिरिति प्रकरणकृदाकूतम्।

ननु तथापि एकविशेषणविशिष्टेऽपरविशेषणवैशिष्ट्यावगाहिबोधस्थलीयमर्यादया विशेष्यतावच्छेदकतया वह्निव्याप्यधूमविशिष्टत्वावच्छिन्नविशेष्यता-निरूपितापरप्रकारताकज्ञानत्वावच्छिन्न प्रति वह्निव्याप्यधूमत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपितप्रकारतासम्बन्धेन निश्चयत्वेन कारणत्वस्वीकारेण लिङ्गोपहितलैङ्गिकानुमितेः लिङ्गविषयकबाधासमवहिताया उपपत्तेः लिङ्गविषयकानुमितौ = लिङ्गोपहितलैङ्गिकभान प्रति मम = लिङ्गोपहितलैङ्गिकभान-वादिनः पृथक्कारणत्वाकल्पनया = स्वातन्त्र्येण परामर्शत्वावच्छिन्नकारणत्वकल्पनानावश्यकत्वेन लाघवमिति। न च लिङ्गोपहितलैङ्गिकानुमितेरनभ्युपगमान्न मम लिङ्गानुपहितलैङ्गिकभानवादिनःपृथक्कारणत्वकल्पनागौरवमिति वाच्यम् 'वह्निव्याप्यधूमवत्पर्वतो वह्निव्याप्यधूमवानि'ति परामर्शात् लिङ्गानुपहितलैङ्गि-कभानवादिनाऽपि लिङ्गोपहितानुमितेः स्वीकारात्ता प्रति पृथक्कारणत्वकल्पनागौरवमतिरिच्यते लिङ्गानुपहितानुमितिपक्षे इति चेत्? न उक्तरीत्या

▶ वल्लभा ◀

के स्वीकार मे अनुमिति और परामर्श के बीच स्वतत्र कार्यकारणभाव की कल्पना अनावश्यक है-यह निष्कर्ष है'←

### ♦◇♦ अनुमिति एव परामर्श के बीच कार्यकारणभाव आवश्यक-उत्तरपक्ष ♦◇♦

लिङ्ग०। जनाव[1] हम करे सो कायदा-यह नादिरशाही यहाँ चल नही सकती। इसका कारण यह हे कि जब अनुमिति को लिङ्गावगाही मानने मे बाध होता है तव आप महाशय भी लिङ्गाऽविषयक अनुमिति का स्वीकार करते है जो व्याप्यविशिष्ट मे अपरविशेषणवैशिष्ट्य का अवगाहन नही करने की वजह आप के अभिमत निश्चयकार्यतावच्छेदक धर्म से आक्रान्त नही होने से तादृश अनुमिति मे आकस्मिकता (= विना कारण के उत्पत्ति) के निवारणार्थ परामर्श ओर अनुमिति के बीच स्वतन्त्र हेतु-हेतुमद्भाव की कल्पना करना आपके मतानुसार भी आवश्यक ही हैं। आशय यह है कि जव पक्ष मे अलोकिकसन्निकर्षजन्य हेत्वभाव का निश्चय होता है तव लोकिक हेतुपरामर्श से होनेवाली अनुमिति को लिङ्गविषयक मानी जा नही सकती, क्योकि तदभाववत्ता का निश्चय तद्वत्ताज्ञान का विरोधी होता है। अत तव लिङ्गानवगाही लिङ्गिगोचर अनुमिति का लिङ्गोपहितलेङ्गिकभानवादी भी स्वीकार करते हे। वह लिङ्गविशिष्ट मे लिङ्गिवेशिष्ट्य का अवगाहन न करने की वजह निश्चयकार्यतावच्छेदक धर्म से आक्रान्त नही है। इसलिए लिङ्गानवगाही अनुमिति के प्रति परामर्श को कारण मानना ही होगा। इस तरह लिङ्गोपहितलैङ्गिकभानवादी को भी लिङ्गविषयकत्वबाधस्थलीय अनुमिति के अनुरोध से अनुमिति ओर परामर्श के वीच कार्य-कारणभाव का स्वीकार आवश्यक ही है तव स्वतन्त्र कार्यकारणभाव की अनावश्यकता के अनुरोध से लिङ्गोपहित लेङ्गिकभान की सिद्धि कैसे हो सकती? गौरव तो दोनो पक्ष मे समान ही हे।

लिङ्गवि०। यहाँ इस शका के कि→'लिङ्गविषयकत्वबाधस्थलीय अनुमिति के प्रति भले ही परामर्श मे पृथक् कारणता की कल्पना आवश्यक हो मगर फिर भी लिङ्गोपहितलैङ्गिकभानवादी हम लाघवपक्ष मे स्थित है, क्योकि लिङ्गविषयक अनुमिति की उत्पत्ति दर्शित

यत्तु 'लिङ्गोपहितलैङ्गिकभानाभ्युपगमेऽशतो बाधसत्प्रतिपक्षयोर्दोषत्वापत्ति'रिति,

◆ हेमलता ◆

पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नविधेयताकानुमितित्वस्य कार्यतावच्छेदकत्वाभ्युपगमेन उभयत्र धूमावगाहि-तदनवगाहिदहनानुमित्योः एकरूपेणैव = पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नविधेयताकनिश्चयत्वेन रूपेणैव परामर्शस्य हेतुत्वात् = कारणत्वसम्भवात्। यथा नीलघटं प्रत्यनीलघटं प्रति च दण्डत्वेनैव दण्डस्य कारणत्वं कार्यतावच्छेदकयोरुभयानुगतमनतिप्रसक्तं घटत्वमेव तथैव लिङ्गोपहितानुमितिं प्रति लिङ्गानुपहितानुमितिं प्रति चैकरूपेणैव परामर्शस्य जनकत्वं कार्यतावच्छेदकञ्चोभयविधानुमित्यनुगतमनतिप्रसक्तं लिङ्गविषयकत्वविनिर्मुक्तं यथायथं विज्ञेयम्, अनुमितौ लिङ्गविषयकत्वस्यायथमाजग्रस्तत्वेन कार्यतावच्छेदककोटिप्रवेशायोगात्। अत एव लिङ्गविषयकत्वबाधाभावस्थलीनानुमितित्वावच्छिन्ने लिङ्गावगाहित्वकल्पनाऽपि प्रत्युक्ता गौरवात्, तस्या लिङ्गाऽविषयकत्वेऽप्युक्तदिशा व्यभिचाराद्योगादिति दिक्।

केचित्तु लिङ्गविषयकानुमितिं प्रति लिङ्गाविषयकानुमितिं प्रति च परामर्शस्य विजातीयपरामर्शत्वेनैकस्यैव कारणत्वं लिङ्गविषयकत्वबाधकसहकृतात्ततो लिङ्गाऽविषयकानुमितिः तदभावसहकृताच्च ततो लिङ्गविषयकानुमितिरित्यस्य सम्भवेन पृथक्कार्यकारणभावकल्पनाया अनावश्यकत्वेन न ततो लिङ्गविषयकत्वनिराकरणं युक्तं किन्तु लिङ्गविषयकानुमितिस्वीकारेऽपि दर्शितदिशा व्यभिचारप्रसङ्गादौर्गेण लिङ्गविषयकत्वकल्पनं युक्तमित्येव ज्यायः इति वदन्ति।

लिङ्गानुपहितलैङ्गिकभानवादिवक्तव्यमपाकर्तुमुपन्यस्यति- यत्तु इति। तन्नेत्यनेनास्यान्वयः। लिङ्गोपहितलैङ्गिकभानाभ्युपगमे अशतः = पक्षतावच्छेदकसामानाधिकरण्येन बाधसत्प्रतिपक्षयोः = साध्याभावनिश्चय-साध्याभावव्याप्यनिश्चययोः दोषत्वापत्तिः = अनुमिति-तत्करणान्यतरप्रतिबन्धकज्ञानाऽविषयत्वप्रसङ्गः। अयमाशयग्रन्थाशयः 'मदीयघटो नीलो न वा?' 'मदीयो न नीलः' 'घटो न नील' इतिज्ञानसत्त्वेऽपि 'मदीयघटो नील'इति ज्ञानस्योपजायमानत्वेन 'मदीयघटो न नील' 'मदीयघटो नीरूप' इति निश्चयदशायाश्च तदनुपजायमानत्वेन समानाकारकस्य ग्राह्याभावावगाहिनो ग्राह्याभावव्याप्यावगाहिनश्च ज्ञानस्य ग्राहकीभूतज्ञानप्रतिबन्धकत्वात् 'पर्वतो वह्निमान्' इति परामर्शात् 'वह्निव्याप्यधूमवान् पर्वतो वह्निमान्' इत्युनुमितिस्वीकारे परामर्शकालीनस्य ग्राह्याभावावगाहिनः 'पर्वतो न वह्निमान्' इति बाधनिश्चयस्य ग्राह्याभावव्याप्यावगाहिनः 'पर्वतो वह्न्यभावव्याप्यजलवान्' इति सत्प्रतिपक्षनिश्चयस्य च भिन्नाकारकत्वेन तादृशलिङ्गोपहितानुमितिप्रतिबन्धकत्वं न स्यात्। न हि प्रतिबन्धकसत्त्वे हेतुसहस्रादपि फलमुत्पद्यते।

केचित्तु 'पक्षतावच्छेदकसामानाधिकरण्येनानुमितिंप्रति तु पक्षतावच्छेदकावच्छेदेन बाधसत्प्रतिपक्षनिश्चययोरेव प्रतिबन्धकत्वं न तु पक्षतावच्छेदकसामानाधिकरण्येन बाधसत्प्रतिपक्षनिश्चययोरिति न तत्राशतो बाधसत्प्रतिपक्षयोः दोषत्वं, लिङ्गोपहितलैङ्गिकभानवादिमते तु अनुमितौ सर्वत्रैव विशिष्टस्यैव पक्षस्य विशेष्यतया भानं न तु शुद्धस्येति सर्वाप्यनुमितिः पक्षतावच्छेदकसामानाधिकरण्येनैवेति ता प्रत्यशतो बाधसत्प्रतिपक्षनिश्चययोःप्रतिबन्धकत्वादशतो बाध-सत्प्रतिपक्षयोर्दोषत्वं न भवेदिति व्याख्यानयन्ति, तदज्ञानविलसितम् सामानाधिकरण्येन अनुमितिं प्रति सिद्धिमात्रस्यैव बाधनिश्चयमात्रस्य

▶ वल्लभा ◀

एकविशेषणविशिष्ट में अपरविशेषणवैशिष्ट्यावगाही बोध की मर्यादा के अनुसार अवश्यक्लृप्त कार्यकारणभाव से ही हो जाने की वजह लिङ्गविषयक अनुमिति के प्रति हमारे मत में परामर्श में स्वतन्त्र कारणता की कल्पना अनावश्यक है। अतः इस लाघव के सहकार से भी लिङ्गोपहित लैङ्गिकभान की सिद्धि की जा सकती है'←समाधान में लिङ्गानुपहितलैङ्गिकभानवादी की ओर से यह कहा जाता है कि प्रदर्शित रीति से लिङ्गविषयक एवं लिङ्गाऽविषयक दहन अनुमिति के प्रति एकरूपेण ही परामर्श में कारणता का स्वीकार उचित है। अर्थात् 'वह्निव्याप्यधूमवान् पर्वतो वह्निमान्' एवं 'पर्वतो वह्निमान्' इन दोनों अनुमितिओं के प्रति पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नविधेयताकपरामर्शत्वेन रूपेण परामर्श को हेतु माना जा सकता है। तादृश परामर्श के कार्यतावच्छेदकविधया दोनों अनुमितिओं में अनुगत पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नविधेयताकानुमितित्व का स्वीकार करने से व्यभिचार, गौरव आदि दोष को भी अवकाश नहीं रहेगा। इसलिए लिङ्गानुपहितलैङ्गिकभानवादी के मत में गौरव का उद्भावन करना अपनी अज्ञता का ही प्रदर्शन है। प्रत्युत लिङ्गविषयकत्वबाधाभावस्थलीय सब अनुमिति में लिङ्गावगाहिता की कल्पना करने की वजह लिङ्गोपहितलैङ्गिकभानवादी के मत में ही गौरव प्रसक्त होता है।

## ◆ लिङ्गोपहितलैङ्गिकभानवादी का परिष्कार ◆

यत्तु०। यहाँ कुछ लिङ्गानुपहितलैङ्गिकभानवादिओं का लिङ्गोपहितभानपक्ष में यह आक्षेप है कि→''यदि परामर्श से उत्पन्न होनेवाली लैङ्गिकानुमिति को लिङ्गावगाही मानी जाय तब 'पर्वतो वह्निव्याप्यधूमवान्' इस परामर्श से होनेवाली 'वह्निव्याप्यधूमवान् पर्वतो वह्निमान्' इस अनुमिति के प्रति 'पर्वतो न वह्निमान्' यह आंशिक = पक्षतावच्छेदकसामानाधिकरण्येन बाधनिश्चय एवं 'पर्वतो वह्न्यभावव्याप्यजलवान्'

तन्न, लिङ्गाविषयकानुमितावेव तयोः प्रतिबन्धकत्वात्।

यदपि शुद्धपर्वतत्वसामानाधिकरण्येन परामर्शात्तथैव सिद्धौ लिङ्गविषयकानुमित्यापत्तिरिति ।

### ◆ हेमलता ◆

सत्प्रतिपक्षनिश्चयमात्रस्य च प्रतिबन्धकत्वात्। पक्षतावच्छेदकसामानाधिकरण्येनानुमितिम्प्रति पक्षतावच्छेदकसामानाधिकरण्येन बाधनिश्चययोरप्रतिबन्धकत्वोपगमे तु पर्वतत्वसामानाधिकरण्येन 'पर्वतो वह्निमानि'ति लिङ्गज्ञान प्रति पर्वतत्वसामानाधिकरण्येन ग्राह्याभाव-तद्व्याप्यावगाहिनोः 'पर्वतो न वह्निमान्' 'पर्वतो वह्निविरहव्याप्यजलवानि'तिबाधसत्प्रतिपक्षनिश्चययोरप्रतिबन्धकत्वप्रसङ्गात्। पक्षैकदेशे बाधादिनिश्चयदशाया तदितरदेशावच्छेदेन तु पक्षेऽनुमितिरभिमतैव। अत एव 'पर्वते शिखरे न वह्निः' इति बाधनिश्चयेऽपि मूले पर्वते वह्निव्याप्यधूमवत्तापरामर्शात् 'मूलावच्छिन्नः पर्वतो वह्निमानि'त्यनुमितिरप्युपपद्यते। लिङ्गोपहितलैङ्गिकभानवादिपक्षे सर्वासामप्यनुमितीना पक्षतावच्छेदकसामानाधिकरण्यावगाहित्वकथनमपि न चारु लिङ्गोपहितलैङ्गिकभानवादिनयेऽत्र वह्निव्याप्यधूमवत्पर्वतत्वलक्षणपक्षतावच्छेदकावच्छेदेनैवानलानुमितिस्वीकारसम्भवेन ताम्प्रति पक्षतावच्छेदकसामानाधिकरण्येनापि बाध-सत्प्रतिपक्षनिश्चययोः प्रतिबन्धकत्वोपपत्तेरिति दिक्।

प्रकृते लिङ्गोपहितलैङ्गिकभानवादी सामानाधिकरण्येन बाधसत्प्रतिपक्षयोः दोपत्वमाविष्कर्तुमुपक्रमते-तन्नेति। उपदर्शितापादनाऽयुक्तत्वमेव दर्शयति लिङ्गाविषयकानुमितौ=पक्षेऽलौकिक-हेत्वभावनिश्चयादिसमकालीनाया लिङ्गविनिर्मुक्ताया अनुमितौ एव तयो = पक्षतावच्छेदकसामानाधिकरण्येन बाध-सत्प्रतिपक्षनिश्चययोः प्रतिबन्धकत्वात् = कारणीभूताभावप्रतियोगित्वाभ्युपगमात्। एतेनापसिद्धान्तोऽपि प्रत्युक्त सामानाधिकरण्येन बाधसत्प्रतिपक्षनिश्चययोः सर्वथाऽप्रतिबन्धकत्वानुपगमात्। मूले एवकारेण लिङ्गविषयकलैङ्गिकभानव्यवच्छेदः कृतः। एतेन सामानाधिकरण्येन लिङ्गोपहितानुमितेः सामानाधिकरण्येन बाधादिनिश्चयाऽप्रतिबध्यत्वमाविष्कृत लिङ्गोपहितलैङ्गिकभानवादिना।

केचित्तु तयो = अशतो बाधसत्प्रतिपक्षयोरिति व्याचक्षते तत्र निश्चीयमानयोरित्यध्याहार्यम्, अन्यथा बाधादे' स्वरूपसत एव प्रतिबन्धकत्वापत्तेः। वस्तुतस्तु बाधसत्प्रतिपक्षनिश्चययोरेव तत्प्रतिबन्धकत्वम्। तेनातीतबाधादिनिश्चयादपि तत्कालीनानुमितिप्रतिरोधोपपत्तिः। अत एवातीतकालावच्छेदेन भूतलादेः वह्निशून्यत्वेन निश्चितत्वेऽपि धूमपरामर्शादिदानीमनलानुमित्युदयोऽपि सङ्गच्छते, साम्प्रतकालावच्छेदेन बाधनिश्चयस्य विरहात्। न चैव बाधज्ञानस्य भ्रमत्वज्ञानदशायामप्यनुमित्यनापत्तिरिति वक्तव्यम् भ्रमत्वानास्कन्दितबाधादिनिश्चयस्यैव तत्प्रतिबन्धकत्वाङ्गीकारादिति दिक्।

यदपि शुद्धपर्वतत्वसामानाधिकरण्येन परामर्शात् = 'पर्वतो वह्निव्याप्यधूमवानि'त्येव यत्किञ्चित्पर्वतविशेष्यकनिश्चयमाश्रित्य, तथैव = शुद्धपर्वतत्वसामानाधिकरण्येनैव 'पर्वतो वह्निमान्' इत्याकारिकाया सिद्धौ सत्यामपि लिङ्गविषयकानुमित्यापत्ति = 'वह्निव्याप्यधूमवत्पर्वतो वह्निमान्'

### ► वल्लभा ◄

यह आशिक सत्प्रतिपक्षनिश्चय प्रतिबन्धक=हेत्वाभास बन नही सकेगा, क्योकि अनुमिति वह्निव्याप्यधूमवत्पर्वतविशेष्यक होने से एव बाधादिनिश्चय केवल (=शुद्ध) पर्वत विशेष्यक होने से दोनो परस्पर समान आकारक नही है। दो ज्ञानो के बीच प्रतिबध्य-प्रतिबन्धकभाव तब हो सकता है यदि दोनो समानाकारक हो। प्रस्तुत मे ग्राह्याभावादिज्ञान (=बाधादिनिश्चय) भिन्नाकारक होने से उसमे धूमावगाही वह्निअनुमिति की प्रतिबन्धकता नामुमकिन हो जाती है। अतएव तादृशानुमिति के प्रति आशिक (=यत्किञ्चित्पर्वतादिविषयक) बाध एव सत्प्रतिपक्ष दोष बन नही सकेगा। इसलिए लिङ्गोपहितलैङ्गिकभान को मान्यता दी जा नही सकती''←

तन्न०। मगर विचार करने पर उपर्युक्त आक्षेप निराधार प्रतीत होता है, क्योकि पक्षतावच्छेदकसामानाधिकरण्येन अर्थात् पक्ष के एक देश मे (=यत्किञ्चित् पर्वत आदि मे) बाध एव सत्प्रतिपक्ष को लिङ्गोपहितलैङ्गिकभानवादी दोष मानते ही नही हैं। लिङ्गावगाही अनुमिति तो तादृशबाधादिनिश्चय से अप्रतिबध्य होने से उपर्युक्त वक्तव्य इष्टापत्ति ही है। हॉ, फिर भी बाधादिनिश्चय मे प्रतिबन्धकता तो मानी जा सकती ही है मगर वह लिङ्गोपहित अनुमिति के प्रति नही मगर लिङ्गानुपहित (=लिङ्गाविषयक) अनुमिति के प्रति ही। पक्ष मे हेतुअश मे अलौकिक बाधादिनिश्चय होने पर तो लिङ्गोपहितलैङ्गिकभानवादी भी लिङ्गानुपहित लैङ्गिकभान का स्वीकार करते हैं। इसका निरूपण तो पहले [देखिये पृष्ठ ५२] हो चूका है। तब धूमपरामर्श से होनेवाली अनुमिति 'पर्वतो वह्निमान्' इत्याकारक होने से पक्षतावच्छेदकसामानाधिकरण्येन अर्थात् यत्किञ्चित् पर्वत मे 'पर्वतो न वह्निमान्' इत्याकारक बाधनिश्चय एव एक पर्वत मे 'पर्वतो वह्निविरहव्याप्यवान्' इत्याकारक सत्प्रतिपक्षनिश्चय समानाकारक ग्राह्याभावावगाही एव ग्राह्याभावव्याप्यावगाही बन जाता है। अतएव तब उन दोनो के बीच प्रतिबध्य-प्रतिबन्धकभाव की सङ्गति हो सकती है। इसलिए लिङ्गोपहितलैङ्गिकभानवादी के पक्ष मे अशत बाध एव सत्प्रतिपक्ष मे सर्वथा अदोषत्व की आपत्ति को अवकाश रह नही सकता।

### ► लिङ्गानुपहितलैङ्गिकभानवादि का आक्षेप एव उसका परिहार ◄

यदपि। लिङ्गोपहितवादी के खिलाफ लिङ्गानुपहितवादी कुछ नैयायिको का यह वक्तव्य है कि→'जब 'पर्वतो वह्निव्याप्यधूमवान्' इत्याकारक शुद्धपर्वतत्वसामानाधिकरण्येन परामर्श होता है और शुद्धपर्वतत्वसामानाधिकरण्येन= पर्वतत्वरूपेण किसी पर्वत मे सिद्धि, जो 'पर्वतो

13

तत्र परस्येष्टापत्तिः तस्यास्तत्रापि विरोधित्वे तु लिङ्गविशिष्टपर्वतत्वसामानाधिकरण्येन परामर्शादपि तस्या सत्यामनुमित्यनापत्तेः।

◆ हेमलता ◆

इत्यनुमापत्ति', शुद्धपर्वतत्वसामानाधिकरण्येन वह्निनिश्चयस्य शुद्धपर्वतत्वसामानाधिकरण्येन वह्न्यनुमितिं प्रति प्रतिबन्धकत्वेन तदानीं 'पर्वतो वह्निमानि'त्यनुमितेरसम्भवात्, यत्किञ्चित्पर्वते 'पर्वतो वह्निव्याप्यधूमवानि'तिनिश्चयस्य सत्त्वात् 'वह्निव्याप्यधूमवत्पर्वतो वह्निमानि'त्यनुमितेः शुद्धपर्वतत्वसामानाधिकरण्येन 'पर्वतो वह्निमान्' इतिसिद्धिप्रतिबध्यताकोटिविनिर्मुक्तत्वाच्च इति केनचिल्लिङ्गानुपहितलैङ्गिकभानवादिनोक्त, तन्मन्दम्, तत्र = तदानीं लिङ्गोपहितलैङ्गिकानुमित्यापादने परस्य = लिङ्गोपहितलैङ्गिकभानवादिनः इष्टापत्ति सम्भवति, इत्यमपि स्वाभिलषितविषयसिद्धेः। ततश्चात्र 'येन केन प्रकारेण स्वाभीष्टमाप्नुयाज्जनः'' इति न्यायापात'। इत्थ लिङ्गानुपहितवादिनो लिङ्गोपहितलैङ्गिकभानवादिसाहाय्यकरण न युक्तमित्याशयः।

ननु शुद्धपर्वतत्वसामानाधिकरण्येन सिद्धेः शुद्धपर्वतत्वसामानाधिकरण्येनानुमिताविव वह्निव्याप्यधूमविशिष्टपर्वतत्वसामानाधिकरण्येनानुमितावपि प्रतिबन्धकत्वात् 'पर्वतो वह्निमानि'ति शुद्धपर्वतत्वसामानाधिकरण्यावगाहिन्या सिद्धे सत्त्वे 'पर्वतो वह्निव्याप्यधूमवानि'ति शुद्धपर्वतत्वसामानाधिकरण्यावगाहिनिश्चयान्न 'पर्वतो वह्निमानि'ति शुद्धपर्वतत्वसामानाधिकरण्यावगाह्यनुमितिप्रसङ्गो न वा वह्निव्याप्यधूमवत्पर्वतत्वसामानाधिकरण्यावगाहिन्या' 'वह्निव्याप्यधू- मवान् पर्वतो वह्निमान्' इत्यनुमितेः प्रसङ्ग इति न लिङ्गोपहितलैङ्गिकभानवादिनोऽत्रेष्टापत्तिस्सम्भवतीत्याशङ्कायां प्रकरणकार' प्राह- तस्या = शुद्धपर्वतत्वसामानाधिकरण्येनानलसिद्धे' तत्र = वह्निव्याप्यधूमवत्पर्वतत्वसामानाधिकरण्येनानलानुमितौ अपि विरोधित्वे = प्रतिबन्धकत्वोपगमे तु लिङ्गविशिष्टपर्वतत्वसामानाधिकरण्येन परामर्शादपि = 'वह्निव्याप्यधूमविशिष्टपर्वतो वह्निव्याप्यधूमवानि'तिनिश्चयमात्मस्यापि तस्या = शुद्धपर्वतत्वसामाना- धिकरण्येनानलसिद्धौ 'पर्वतो वह्निमानि'त्याकारिकाया सत्या अनुमित्यनापत्ते = 'वह्निव्याप्यधूमवान् पर्वतो वह्निमानि'त्यनुमिते' उभयपक्षसम्मताया अपि उदयाऽसम्भवात्, तस्या' शुद्धपर्वतत्वसामानाधिकरण्येन सिद्धित. प्रतिबध्यत्वात्।

ननु लिङ्गोपहितलैङ्गिकभाननये शुद्धपर्वतत्वसामाधिकरण्येन सिद्धो सत्या शुद्धपर्वतत्वसमानाधिकरण्येन धूमपरामर्शात् कथ 'वह्निव्याप्यधूमवत्पर्वतो

▶ वल्लभा ◀

वह्निमान्' इत्याकारक होती है, भी होती ह तब हमारे मतानुसार तो 'पर्वतो वह्निमान्' इत्याकारक शुद्धपर्वतत्वसामानाधिकरण्येन अनुमिति हो सकती नहीं है, क्योंकि शुद्धपर्वतत्वसामानाधिकरण्येन वह्निअनुमिति के प्रति शुद्धपर्वतत्वसामानाधिकरण्येन वह्निनिश्चय प्रतिबन्धक होता है। मगर धूमपरामर्श से 'वह्निव्याप्यधूमवत्पर्वतो वह्निमान्' इत्याकारक लिङ्गोपहित अनुमिति का स्वीकार किया जाय तब तो 'पर्वतो वह्निमान्' इत्याकारक शुद्धपर्वतत्वसामानाधिकरण्येन सिद्धि=निश्चय होने पर भी 'पर्वतो वह्निव्याप्यधूमवान्' इत्याकारक शुद्धपर्वतत्वसामानाधिकरण्येन धूमपरामर्श से 'वह्निव्याप्यधूमवान् पर्वतो वह्निमान्' इत्याकारक अनुमिति की आपत्ति आयेगी, क्योंकि लिङ्गोपहित वह्निअनुमिति शुद्धपर्वतत्वसामानाधिकरण्यावगाही नहीं होने से शुद्धपर्वतत्वसामानाधिकरण्यावगाही वह्निसिद्धि की प्रतिबध्यताकोटि से बहिर्भूत हैं। इस समस्या के सबब लिङ्गोपहित लैङ्गिकभान का स्वीकार किया जा नहीं सकता'←

तत्र०। मगर लिङ्गानुपहितलैङ्गिभानवादी का उपर्युक्त कथन असङ्गत है, चूँकि यहाँ प्रतिवादी है लिङ्गोपहितलैङ्गिकभानवादी, जिसको प्रदर्शित परिस्थिति में धूमपरामर्श के बल से 'वह्निव्याप्यधूमवान् पर्वतो वह्निमान्' इत्याकारक अनुमिति की आपत्ति अनिष्ट नहीं है किन्तु इष्ट ही है। प्रतिवादी के अभीष्ट का ही आपादन करने से वादी निगृहीत होता है। इसलिए लिङ्गानुपहितलैङ्गिकभानवादी का उपर्युक्त आक्षेप नितान्त मिथ्या है। तब लिङ्गोपहित वह्निअनुमिति का स्वीकार करने पर भी लिङ्गोपहित लैङ्गिकभान की सिद्धि हो जायेगी। यदि यहाँ यह कहा जाय कि→'शुद्धपर्वतत्वसामानाधिकरण्येन वह्निसिद्धि जैसे शुद्धपर्वतत्वसामानाधिकरण्येन वह्निअनुमिति की विरोधी है ठीक वैसे ही वह्निव्याप्यधूमवत्पर्वतत्वसामानाधिकरण्यावगाही वह्निविधेयक अनुमिति की भी विरोधी है। इसलिए शुद्धपर्वतत्वसामानाधिकरण्यावगाही धूमपरामर्श उपस्थित होने पर भी 'पर्वतो वह्निमान्' इत्याकारक शुद्धपर्वतत्वसामानाधिकरण्यावगाही वह्निसिद्धि होने पर 'वह्निव्याप्यधूमवत्पर्वतो वह्निमान्' इत्याकारक लिङ्गविशिष्टपर्वतत्वसामानाधिकरण्यावगाही वह्निविधेयक अनुमिति की आपत्ति को अवकाश रहता नहीं है। प्रतिबन्धक होने पर कार्यजन्म कैसे मुमकिन होगा?' ←

तस्या०। तो लिङ्गानुपहितलैङ्गिकभानवादी का यह कथन भी असङ्गत है, क्योंकि शुद्धपर्वतत्वसामानाधिकरण्येन वह्निसिद्धि को शुद्धपर्वतत्वसामानाधिकरण्यावगाही वह्निअनुमिति की भी विरोधी मानी जायेगी तब तो 'वह्निव्याप्यधूमवत्पर्वतो वह्निव्याप्यधूमवान्' इत्याकारक लिङ्गविशिष्टपर्वतत्वसामानाधिकरण्यावगाही धूमपरामर्श होने पर भी 'पर्वतो वह्निमान्' इत्याकारक शुद्धपर्वतत्वसामानाधिकरण्येन वह्निसिद्धि से 'वह्निव्याप्यधूमवान् पर्वतो वह्निमान्' इत्याकारक वह्निव्याप्यधूमविशिष्टपर्वतत्वसामानाधिकरण्येन वह्निविधेयक अनुमिति प्रतिबध्य हो जाने की वजह तब 'वह्निव्याप्यधूमवान् पर्वतो वह्निमान्' इत्याकारक अनुमिति का उदय हो नहीं सकेगा। मगर शुद्धपर्वतत्वसामानाधिकरण्येन वह्निसिद्धि होने पर भी वह्निव्याप्यधूमवत्पर्वतत्वसामानाधिकरण्येन धूमपरामर्श से वह्निव्याप्यधूमवत्पर्वतत्वसामानाधिकरण्येन 'वह्निव्याप्यधूमवान् पर्वतो वह्निमान्' इत्याकारक अनुमिति का उदय तो लिङ्गोपहितवादी एवं लिङ्गानुपहितवादी दोनों वादियों को मान्य है। स्वसम्मत तादृश अनुमिति की उपपत्ति न होने की वजह यहाँ लिङ्गानुपहितलैङ्गिकभानवादी की ओर से जो कहा गया था वह अपनी मनमानी केवल कल्पना ही

वस्तुतः शुद्धपर्वतत्वसामानाधिकरण्येन वह्निमत्तानिश्चयस्य पर्वतत्वातिरिक्तधर्मानवच्छिन्नविशेष्यताक - वह्नित्वावच्छिन्नविधेयताकानुमितित्वमेव प्रतिवध्यतावच्छेदक न तु पर्वतत्वातिरिक्त यद् वह्निव्याप्यधूमादि तदतिरिक्तधर्मानवच्छिन्नविशेष्यताकवह्निविधेयताकानुमितित्व, महागौरवात्।

◆ हेमलता ◆

वह्निमानि'त्यनुमितिः सम्भवतीत्याशङ्काया लिङ्गोपहितलैङ्गिकभानवायाह वस्तुत इति। शुद्धपर्वतत्वसामानाधिकरण्येन = पर्वतत्वावच्छिन्नाधिकरणतावति यस्मिन् कस्मिंश्चित् वह्निमत्तानिश्चयस्य पर्वतत्वातिरिक्तधर्मानवच्छिन्नविशेष्यता-वह्नित्वावच्छिन्नविधेयताकानुमितित्वमेव प्रतिवध्यतावच्छेदकम्। वह्निव्याप्यधूमस्य पर्वतत्वातिरिक्तधर्मत्वेन वह्निव्याप्यधूमविशिष्टपर्वतत्वसामानाधिकरण्यावगाहिदहनानुमितिनिष्ठविशेष्यितानिरूपितविशेष्यतायाः पर्वतत्वातिरिक्तधर्मावच्छिन्नात् वह्निव्याप्यधूमविशिष्टपर्वतत्वसामानाधिकरण्येनानलानुमिते' न शुद्धपर्वतत्वसामानाधिकरण्यावगाहि- वह्निसिद्धिप्रतिवध्यत्वम्। ततः शुद्धपर्वतत्वसामानाधिकरण्येन 'पर्वतो वह्निमानि'ति सिद्धिसत्त्वेऽपि धूमपरामर्शात् वह्निव्याप्यधूमवत्पर्वतत्वसामानाधिकरण्यावगाहिन्या' 'वह्निव्याप्यधूमवान् पर्वतो वह्निमान्' इत्यनुमितेरनपायत्वमेव। न हि प्रतिवध्यतावच्छेदकधर्मानाक्रान्तस्य प्रतिरोध कर्तुं प्रतिवन्धकोऽपि प्रभु'।

ननु शुद्धपर्वतत्वसामानाधिकरण्येन दहनसिद्धेः प्रतिवध्यतावच्छेदक न पर्वतत्वातिरिक्तधर्मानवच्छिन्नविशेष्यताक - वह्नित्वावच्छिन्नविधेयताकानुमितित्व किन्तु पर्वतत्व - वह्निव्याप्यधूमातिरिक्तधर्मानवच्छिन्नविशेष्यताक - वह्नित्वावच्छिन्नविधेयताकानुमितित्वमेव। ततश्च शुद्धपर्वतत्वसामानाधिकरण्येनानलनिश्चयदशाया धूमपरामर्शात् 'वह्निव्याप्यधूमवत्पर्वतो वह्निमान्' इत्यनुमितिरपि न सम्भवति, वह्नित्वावच्छिन्नविधेयताकानुमितिनिष्ठविशेष्यितानिरूपितविशेष्यतया वह्निव्याप्यधूम-पर्वतत्वातिरिक्तधर्मानवच्छिन्नत्वेन तादृशानुमितेः प्रतिवध्यतावच्छेदकाक्रान्तत्वात्। ततश्च न लिङ्गोपहितलैङ्गिकसिद्धिरित्याशङ्कामपाकर्तुं लिङ्गोपहितलैङ्गिकभानवायाह न तु पर्वतत्वातिरिक्तमित्यादि। अत्र 'पर्वतत्वातिरिक्त यद्वह्निव्याप्यधूमादिव्यतिरिक्त तदनवच्छिन्नविशेष्यताकवह्निविधेयताकानुमितित्व' इत्येवम्पाठो भवितुमर्हति, यथाश्रुतपाठस्तु न सङ्गच्छते। तथा सति पर्वतत्वातिरिक्त यद्वह्निव्याप्यधूमादि तदतिरिक्तधर्मः पर्वतत्वमपि, तदनवच्छिन्नविशेष्यताक-वह्नित्वावच्छिन्नविधेयताकानुमितित्वस्य शुद्धपर्वतत्वसामानाधिकरण्येनानुमितावप्यभावादिति वदन्ति।

लिङ्गोपहितलैङ्गिकभानवादी तद्व्यवच्छेदे हेतुमाह- महागौरवादिति प्रतिवध्यतावच्छेदकधर्मशरीरकृतगौरवात्। प्रतिवध्यतावच्छेदकस्य प्रतिवन्धकतदभावनिष्ठकारणतानिरूपितकार्यतावच्छेदकत्वेनात्र कार्यतावच्छेदकधर्मशरीरगौरवापातात् कार्यकारणभावशरीरगौरवमिति लिङ्गोपहितलैङ्गिकभानवादिनोऽभिप्रायः।

► वल्लभा ◄

है, जो वास्तविकता की भूमिका को छूती नही है।

वस्तुत०। मगर जव तक वास्तविवकता का सवाल ह तव हम यह कह सकते हे कि शुद्धपर्वतत्वसामानाधिकरण्येन वह्निमत्ता के निश्चय का, जो पर्वतत्वरूप से किसी पर्वतविशेष मे अग्नि का अवगाहन करता है, प्रतिवध्यतावच्छेदक धर्म है पर्वतत्वातिरिक्तधर्मावच्छिन्नविशेष्यताकवह्नित्वावच्छिन्नविधेयताकानुमितित्व। अत पर्वतत्व से भिन्न धर्म जिसका अवच्छेदक नही हे ऐसी विशेष्यता की निरूपक वह्निअनुमिति ही शुद्धपर्वतत्वगामानाधिकरण्येन वह्निनिश्चय से प्रतिवध्य होगी। इसलिए शुद्धपर्वतत्वसामानाधिकरण्येन वह्निनिश्चय होने पर 'पर्वतो वह्निमान्' यह अनुमिति हो सकती नही है, क्योकि इस अनुमिति की विशेष्यता पर्वतत्व से ही अवच्छिन्न है न कि पर्वतत्वातिरिक्त धर्म से। मगर इस परिस्थिति मे 'वह्निव्याप्यधूमवान् पर्वतो वह्निमान्' इत्याकारक अनुमिति होने मे कोई दिक्कत नही होगी, क्योकि पर्वतत्व से भिन्न वह्निव्याप्यधूम से अवच्छिन्न विशेष्यता का अवगाहन वह अनुमिति करती हे। इसलिए लिङ्गोपहितलैङ्गिकभान की सिद्धि निरावाध होगी। यहाँ ऐसा कहा जा नही सकता कि →'शुद्धपर्वतत्वसामानाधिकरण्येन वह्निनिश्चय का प्रतिवध्यतावच्छेदक शुद्धपर्वतत्वातिरिक्त जो वह्निव्याप्यधूमादि, उनसे अतिरिक्त द्रव्यत्वादि धर्म से अनवच्छिन्न विशेष्यता की निरूपक वह्निविधेयक अनुमिति मे रहनेवाला तादृशानुमितित्व ही है। इसलिए 'पर्वतो वह्निमान्' इत्याकारक किसी पर्वत मे वह्निनिश्चय होने पर धूमपरामर्श से 'वह्निव्याप्यधूमवान् पर्वतो वह्निमान्' इत्याकारक अनुमिति भी हो नही सकेगी, क्योकि उस अनुमिति की विशेष्यता का अवच्छेदक वह्निव्याप्यधूम एव पर्वतत्व को छोड कर अन्य कोई नही होने से वह वह्निविधेयताक अनुमिति पर्वतत्व-वह्निव्याप्यधूमातिरिक्तधर्मानवच्छिन्नविशेष्यतानिरूपक ही है। प्रतिवध्यतावच्छेदकाक्रान्त तादृश अनुमिति का उदय तव प्रतिसिद्ध होने से लिङ्गोपहित लैङ्गिकभान की सिद्धि हो नही सकेगी'←क्योकि इस कल्पना मे प्रतिवध्यतावच्छेदकधर्म अति गुरुभूत होता है। शुद्धपर्वतत्वसामानाधिकरण्येन वह्निसिद्धि के प्रतिवध्यतावच्छेदकधर्मविधया पर्वतत्वातिरिक्तधर्मानवच्छिन्नविशेष्यताक-वह्निविधेयकानुमितित्व की अपेक्षा पर्वतत्व-वह्निव्याप्यधूम-अतिरिक्तधर्मानवच्छिन्नविशेष्यताक-वह्निविधेयकानुमितित्व का स्वीकार करने पर प्रतिवध्यतावच्छेदक धर्म मे गोरव स्पष्ट ही हे। अतएव इस परिस्थिति मे प्रतिवन्धकाभाव का कार्यतावच्छेदक भी अतिगुरु हो जायेगा, क्योकि प्रतिवध्यतावच्छेदक धर्म प्रतिवन्धकाभावनिष्ठकारणता से निरूपित कार्यता का अवच्छेदक वनता है। इसलिए पर्वतत्वेन रूपेण पर्वतविशेष मे वह्नि का निश्चय होने पर भी धूमपरामर्श से 'वह्निव्याप्यधूमवत्पर्वतो वह्निमान्' इत्याकारक अनुमिति होने मे कोई वाधा नही होगी, क्योकि वह पर्वतत्वातिरिक्तधर्मावच्छिन्नविशेष्यताक है। अत इसके फलस्वरूप लिङ्गोपहित लेङ्गिकभान की सिद्धि हो जायेगी।

अत्रेद विचारणीय शुद्धपर्वतत्वसामानाधिकरण्येन सिद्धिसत्त्वे लिङ्गविषयकानुमित्यभ्युपगमे 'पर्वतो वह्निव्याप्यधूमवान्' इति परामर्शघटितसामग्र्याः प्रत्यक्षप्रतिबन्धकत्वे 'वह्निव्याप्यधूमवत्पर्वतो वह्निमानि'तिसिद्ध्यभावस्य घटकत्वे गौरवम्। किञ्च 'पर्वतो न वह्निव्याप्यधूमवानि'ति बाधकाले 'पर्वतो वह्निमानि'तिसिद्धिमत्त्वे प्रत्यक्षस्यैवोदयात्प्रागुक्तपरामर्शघटितसामग्रीप्रतिबन्धकताया

◆ हेमलता ◆

प्रकरणकार इदानीं लिङ्गोपहितलैङ्गिकभाननिराकरणार्थमुपक्रमते-अत्र = शुद्धपर्वतत्वसामानाधिकरण्यावगाहिवह्निनिश्चयनिष्ठप्रतिबन्धकतानिरूपित-प्रतिबध्यतावच्छेदकधर्मविधया पर्वतत्वातिरिक्तधर्मानवच्छिन्नविशेष्यताक-वह्नित्वावच्छिन्नविधेयताकानुमितित्वस्वीकारे, इद अनुपद वक्ष्यमाण विचारणीयम्। तथाहि शुद्धपर्वतत्वसामानाधिकरण्येन सिद्धिसत्त्वे = वह्निनिश्चयदशायां लाघवेन पर्वतत्वातिरिक्तधर्मानवच्छिन्नविशेष्यताकवह्निविधेयकानुमितित्वे तत्प्रतिबध्यतावच्छेदकत्वमङ्गीकृत्य धूमपरामर्शात् 'वह्निव्याप्यधूमवान् पर्वतो वह्निमानि'त्येव लिङ्गविषयकानुमित्यभ्युपगमे = दर्शितलिङ्गोपहितलैङ्गिकभान-स्वीकारे तु 'पर्वतो वह्निव्याप्यधूमवान्' इति परामर्शघटितसामग्र्याः प्रत्यक्षप्रतिबन्धकत्वे =विभिन्नविषयकसाक्षात्कारप्रतिबन्धकत्वशरीरे 'वह्निव्याप्यधूमवत्पर्वतो वह्निमानि'तिसिद्ध्यभावस्य घटकत्वे = घटकत्वस्वीकारे गौरव = अवच्छेदकगौरवम्। अयम्भावः पर्वतत्वातिरिक्तधर्मानवच्छिन्नविशेष्यताक-वह्निविधेयकानुमितित्वस्य शुद्धपर्वतत्वसामानाधिकरण्यावगाहि-वह्निसिद्धिप्रतिबध्यतावच्छेदकत्वे तत्सत्त्वेऽपि धूमपरामर्शात् 'वह्निव्याप्यधूमवान् पर्वतो वह्निमान्' इति लिङ्गविषयकानुमितिर्न प्रतिरोद्धुं शक्येति तांप्रति 'वह्निव्याप्यधूमवान् पर्वतो वह्निमानि'तिसिद्धेः प्रतिबन्धकत्वमवश्यकल्पनीयम्। ततश्च तादृशसिद्धिप्रतियोगिकाभावस्य लिङ्गावगाह्यनुमितिम्प्रति कारणत्व वाच्यमिति भिन्नविषयकसाक्षात्कारप्रतिबन्धकीभूतानुमितिसामग्रीशरीरे 'वह्निव्याप्यधूमवान् पर्वतो वह्निमान्' इत्यादिसिद्धिविरहस्य निवेशनीयत्वेन गौरवम्। लिङ्गानुपहितलैङ्गिकभानपक्षे तु 'पर्वतो वह्निव्याप्यधूमवान्' इति परामर्शघटितानुमितिसामग्र्याः प्रत्यक्षप्रतिबन्धकत्वे 'पर्वतो वह्निमानि'ति सिद्धिविरहस्यैव घटकत्वमिति लाघवम्।

ननु प्रतिबन्धकतावच्छेदकस्य कारणताशरीरेऽप्रविष्टत्वेन प्रतिबन्धकतावच्छेदकगौरवस्य निर्दोषत्व तत्र तत्र प्रसिद्धमेवेत्याशङ्कायां प्रकरणकारो लिङ्गोपहितलैङ्गिकभानपक्षे दोषान्तरमाविष्करोति - किञ्चेति। 'पर्वतो न वह्निव्याप्यधूमवान्' इतिबाधकाले = पर्वतविशेष्यक-वह्निव्याप्यधूमाभावप्रकारकनिश्चयदशायां 'पर्वतो वह्निमानि'तिसिद्धिमत्त्वे लिङ्गोपहितलैङ्गिकभानवादिमते या 'पर्वतो वह्निमानि'त्यनुमितिः स्वीक्रियते सा न सम्भवति, शुद्धपर्वतत्वसामानाधिकरण्येन दहननिश्चयस्य प्रतिबध्यतावच्छेदकीभूतेन पर्वतत्वातिरिक्तधर्मानवच्छिन्नविशेष्यताक-वह्निविधेयकानुमितित्वेन तस्या आक्रान्तत्वात्। तदानीं भिन्नविषयकस्य प्रत्यक्षस्य एव उदयात् प्रागुक्तपरामर्शघटितसामग्रीप्रतिबन्धकताया ='पर्वतो

► वल्लभा ◄

## लिङ्गोपहितलैङ्गिकभानवादसमीक्षा

अत्रेद वि०। मगर प्रकरणकार श्रीमद्जी यहाँ अपने विचारों को व्यक्त करने के लिए कहते है कि लिङ्गोपहितलैङ्गिकभानवादी का उपर्युक्त मन्तव्य विचारणीय है न कि विना विचारविमर्श के उपादेय। इसका कारण यह है कि शुद्धपर्वतत्वसामानाधिकरण्येन वह्निनिश्चय के प्रतिबध्यतावच्छेदकधर्मविधया पर्वतत्वातिरिक्तधर्मानवच्छिन्नविशेष्यताकवह्निविधेयकानुमितित्व का स्वीकार किया जाय और पर्वतत्वरूपेण यत् किञ्चित् पर्वत मे वह्नि का निश्चय होने पर भी धूमपरामर्श मे 'वह्निव्याप्यधूमवान् पर्वतो वह्निमान्' इत्याकारक लिङ्गावगाही अनुमिति का स्वीकार किया जाय तब तो लिङ्गोपहितलैङ्गिकभानवादी के मतानुसार गौरव प्रसक्त होगा, क्योंकि प्रत्यक्ष के प्रति अनुमितिसामग्री प्रतिबन्धक होने से 'पर्वतो वह्निव्याप्यधूमवान्' इत्याकारकपरामर्श से घटित अनुमितिसामग्री मे, जो प्रत्यक्षप्रतिबन्धक है, 'वह्निव्याप्यधूमवान् पर्वतो वह्निमान्' इत्याकारक सिद्धि के अभाव का घटकविधया निवेश करना होगा, अन्यथा धूमपरामर्श होने पर कभी भी 'वह्निव्याप्यधूमवान् पर्वतो वह्निमान्' इस अनुमिति का प्रतिरोध हो नहीं सकेगा। मगर यह तो लिङ्गोपहितलैङ्गिकभानवादी को भी नामंजूर है।

किञ्च०। इसके अतिरिक्त दूसरी बात यह है कि जब 'पर्वतो न वह्निव्याप्यधूमवान्' इत्याकारक हेत्वभावनिश्चय पक्ष मे होगा और 'पर्वतो वह्निमान्' इत्याकारक सिद्धि=निश्चय की उपस्थिति होगी तब प्रत्यक्ष का ही उदय होगा, क्योंकि प्रत्यक्ष के प्रति अनुमितिसामग्री प्रतिबन्धक होती है। इसलिए 'पर्वतो वह्निव्याप्यधूमवान्' इत्याकारक परामर्श से घटित अनुमितिसामग्री, जो प्रत्यक्षप्रतिबन्धक है, मे 'पर्वतो वह्निमान्' इत्याकारक शुद्धपर्वतत्वसामानाधिकरण्येन वह्निनिश्चय के अभाव का भी प्रवेश होगा। मगर जब 'पर्वतो न वह्निव्याप्यधूमवान्' इत्याकारक बाध=लिङ्गाभावनिश्चय होता नहीं है तब भी 'पर्वतो वह्निमान्' ऐसी शुद्धपर्वतत्वसामानाधिकरण्येन वह्निसिद्धि होने पर लिङ्गोपहितलैङ्गिकभानवादी के मतानुसार 'वह्निव्याप्यधूमवान् पर्वतो वह्निमान्' इत्याकारक अनुमिति का ही उदय होगा न कि प्रत्यक्ष का, क्योंकि लिङ्गोपहितलैङ्गिकभानवादी के मतानुसार शुद्धपर्वतत्वसामानाधिकरण्येन दहननिश्चय का प्रतिबध्यतावच्छेदक धर्म पर्वतत्वातिरिक्तधर्मानवच्छिन्नविशेष्यताक-वह्निविधेयताकअनुमितित्व होने से लिङ्गोपहित अनुमिति सिद्धिप्रतिबध्यतावच्छेदक धर्म से अनाक्रान्त है। इसलिए तब भिन्नविषयक प्रत्यक्ष के वारणार्थ भिन्नविषयकप्रत्यक्षप्रतिबन्धकसा-

शुद्धपर्वतत्वसामानाधिकरण्येन सिद्ध्यभावोऽपि निविशते तथाविधबाधासत्त्वेऽप्युक्तसिद्धिसत्त्वेऽनुमितेरुत्पत्तेस्तदानी भिन्नविषयकप्रत्यक्ष-वारणाय तादृशसिद्ध्यभावमनिवेश्यापि प्रतिबन्धकतान्तरकल्पनमावश्यकमिति गौरवम्।

अस्माकन्तु 'पर्वतो न वह्निव्याप्यधूमवानि'तिबाधकालीनादपि 'पर्वतो वह्निव्याप्यधूमवानि'ति परामर्शात् 'पर्वतो वह्निमानि'तिसिद्धिसत्त्वेऽनुमितेरनभ्युपगमात् सिद्ध्यभावानिवेशेन प्रतिबन्धकत्वकल्पने लाघवमिति।

## ◆ हेमलता ◆

वह्निव्याप्यधूमवानि'ति निश्चयगर्भिताया भिन्नगोचरसाक्षात्कारप्रतिबन्धकीभूतायामनुमितिसामग्र्या शुद्धपर्वतत्वसामानाधिकरण्येन = 'पर्वतो वह्निमान्' इतिनिश्चयप्रतियोगिकाभावः अपि निविशते, अन्यथा तादृशसिद्धिसत्त्वे पक्षे हेत्वभावनिश्चयदशाया प्रत्यक्षोदयानुपपत्तेः। तथाविधबाधाऽसत्त्वे = शुद्धपर्वतत्वसामानाधिकरण्येन 'पर्वतो न वह्निव्याप्यधूमवान्'इति हेत्वभावनिश्चयस्य विरहदशाया अपि उक्तसिद्धिसत्त्वे = शुद्धपर्वतत्वसामानाधिकरण्येन 'पर्वतो वह्निमान्'इति निश्चयस्योपस्थितो लिङ्गोपहितलैङ्गिकभानवादिमते पर्वतत्वातिरिक्तधर्मानवच्छिन्नविशेष्यताक-वह्निविधेयकानुमितित्वस्यैव शुद्धपर्वत-त्वसामानाकिरण्येन सिद्धिप्रतिबध्यतावच्छेदकत्वेन तद्विनिर्मुक्तायाः 'वह्निव्याप्यधूमवान् पर्वतो वह्निमान्' इत्याकारिकाया अनुमिते एव उत्पत्ते = उदयस्वीकारात् तदानी = हेत्वभावनिश्चयाभावविशिष्टविधेयनिश्चयदशाया भिन्नविषयकप्रत्यक्षवारणाय 'पर्वतो वह्निव्याप्यधूमवानि'तिपरामर्शघटिते प्रतिबन्धकसामग्रीशरीरे तादृशसिद्ध्यभाव = शुद्धपर्वतत्वसामानाधिकरण्येन 'पर्वतो वह्निमानि'तिनिश्चयविरह अनिवेश्यापि भिन्नविषयक प्रत्यक्ष प्रति प्रतिबन्धकतान्तरकल्पन = पृथक्प्रतिबन्धकत्वकल्पन आवश्यक, अन्यथा तदानी भिन्नविषयकसाक्षात्कारोदयस्य लिङ्गोपहितलैङ्गिकभानवादिनाऽनङ्गी-कृतस्य गीर्वाणगुरुणापि निवारयितुमशक्यत्वात् इति = स्वतन्त्रप्रतिबन्धकत्वकल्पनावश्यकत्वेन हेतुना भिन्नविषयकप्रत्यक्ष प्रति कारणतान्तरकल्पनावश्य-कत्वाल्लिङ्गोपहितलैङ्गिकभानवादिमते गोरव दुर्निवारम्।

नन्विद गौरव तु लिङ्गानुपहितलेङ्गिकभानवादिनाऽपि स्वीकर्तव्यमिति तुल्यत्वान्न लिङ्गोपहितलैङ्गिकभानवादिपक्षे दूषणावकाशो मनागपीत्याशङ्का-यामाचष्टे - अस्माक लिङ्गानुपहितलैङ्गिकभानवादिना मते तु 'पर्वतो न वह्निव्याप्यधूमवानि'तिबाधकालीनादपि किं पुनः तादृशहेत्वभावनिश्चयाभावकाली-नादित्यपिशब्दार्थः, विशेष्यमुपदर्शयति 'पर्वतो वह्निव्याप्यधूमवानि'ति परामर्शात् 'पर्वतो वह्निमानि'तिसिद्धिसत्त्वे 'वह्निव्याप्यधूमवान् पर्वतो वह्निमान्' इत्याकारिकाया अनुमितेः अनभ्युपगमात् उक्तपरामर्शघटितसामग्र्या सिद्ध्यभावाऽनिवेशेन = 'वह्निव्याप्यधूमवान् पर्वतो वह्निमानि'ति निश्चयाभावप्रवेशाना-वश्यकत्वेन भिन्नविषयकप्रत्यक्ष प्रति प्रतिबन्धकत्वकल्पने लाघव = प्रतिबन्धकतान्तराऽकल्पनेन लाघवमित्यर्थः। इदमत्राकूतम् लिङ्गानुपहितलैङ्गिकभान-वादिना मते पर्वते हेत्वभावनिश्चयकाले तदभावकाले च 'पर्वतो वह्निमानि'तिनिश्चयदशाया 'पर्वतो वह्निमानि'त्यनुमितिर्न भवितुमर्हति, तस्याः शुद्धपर्वतत्वसामानाधिकरण्येन सिद्धिप्रतिबध्यत्वात् 'पर्वतो वह्निव्याप्यधूमवानि'ति परामर्शात् 'वह्निव्याप्यधूमवान् पर्वतो वह्निमानि'त्यनुमितिस्तु नैवोपेयते। अतो न भिन्नगोचरप्रत्यक्ष प्रति प्रतिबन्धकीभूतेऽनुमितिसामग्रीशरीरे 'पर्वतो वह्निव्याप्यधूमवानि'तिपरामर्शघटिते 'वह्निव्याप्यधूमवान् पर्वतो वह्निमानि'तिनिश्चयाभावप्रवेश' आवश्यकः। अतो लिङ्गानुपहितलैङ्गिकभानवादिमते प्रतिबन्धकताद्वयाऽकल्पनेन लाघवम्। लिङ्गोपहितलैङ्गिकभानवादिपक्षे तु प्रदर्शितरीत्या प्रतिबन्धकताद्वयकल्पनावश्यकत्वेन गौरवमुक्तमेव।

अथ लिङ्गोपहितलैङ्गिकभानवादिमते 'वह्निव्याप्यधूमवान् पर्वतो वह्निव्याप्यधूमवान्' 'पर्वतो वह्निव्याप्यधूमवान्' इतिद्विविधपरामर्शयोः 'वह्निव्याप्यधूमवान् पर्वतो वह्निमानि'त्येकविधानुमिति प्रत्येव कारणत्व ताम्प्रति 'वह्निव्याप्यधूमवान् पर्वतो वह्निमानि'तिनिश्चयस्यैव प्रतिबन्धकत्वम्।

## ▶ वल्लभा ◀

मग्री मे से शुद्धपर्वतत्वसामानाधिकरण्येन सिद्धि के अभाव का बहिर्भाव करना होगा। मतलब कि हेत्वभावनिश्चयकालीन और हेतुनिश्चयकालीन भिन्नविषयकप्रत्यक्षप्रतिबन्धकता मे द्वैविध्य प्रसक्त होने से गोरव होगा। लिङ्गोपहित-लैङ्गिकभानवादी के मतानुसार अवश्य कल्पनीय अन्य प्रतिबन्धकता लिङ्गानुपहितलेङ्गिकभानवादी के मत मे अनावश्यक होने से वैशेषिकमतानुसारी पक्ष मे गौरव स्पष्ट ही है।

अस्माक०। हमारे मतानुसार तो 'पर्वतो न वह्निव्याप्यधूमवान्' इत्याकारक बाध=हेत्वभावनिश्चय होने पर भी उसके समकालीन 'पर्वतो वह्निव्याप्यधूमवान्' इत्याकारक परामर्श से वह्निविधेयक अनुमिति ही अस्वीकृत हे, यदि तब 'पर्वतो वह्निमान्' इत्याकारक सिद्धि=निश्चय हो तो। तब विभिन्नविषयक प्रत्यक्ष का ही उदय होगा। इसलिए विभिन्नविषयक प्रत्यक्ष की प्रतिबन्धकीभूत पर्वतविशेष्यकपरामर्शादिघटित सामग्री मे 'वह्निव्याप्यधूमवान् पर्वतो वह्निमान्' इत्याकारकनिश्चय के अभाव का निवेश करने की कोई जरूरत ही नही होगी। वह आवश्यकता तब होती यदि उपर्युक्त परिस्थिति मे 'वह्निव्याप्यधूमवान् पर्वतो वह्निमान्' इत्याकारक अनुमिति का हम स्वीकार करे। मगर हम लिङ्गानुपहितलेङ्गिकभानवादी तादृश अनुमिति को मान्यता देते नही है। अतएव द्विविध प्रतिबन्धकता की कल्पना हमारे मतानुसार अनावश्यक होने से लाघव है। केवल एकविध प्रदर्शित प्रतिबन्धकता के स्वीकार से ही सब सङ्गत हो जाता है।

अथ लिङ्गविशिष्टपर्वतत्वसामानाधिकरण्येन शुद्धपर्वतत्वसामानाधिकरण्येन च परामर्शघटितसामग्र्योरेकरूपेणैव प्रतिबन्धकत्वान्नोक्तदोष इति चेत् ? न, लिङ्गान्तरविशिष्टपर्वतत्वसामानाधिकरण्येन सिद्धौ सत्यां लिङ्गान्तरविशिष्टपर्वतत्वसामानाधिकरण्येनानुमित्यनुदया- पत्तिवारणाय तत्तत्सिद्ध्यभावादिघटिततत्तद्रूपेण प्रतिबन्धकत्वावश्यकत्वादिति दिग्।

## ◆ हेमलता ◆

ततश्च लिङ्गविशिष्टपर्वतत्वसामानाधिकरण्येन शुद्धपर्वतत्वसामानाधिकरण्येन च परामर्शघटितसामग्र्यो विभिन्नविषयप्रत्यक्षं प्रति एकरूपेण = लिङ्गविशिष्टपर्वतत्वसामानाधिकरण्यावगाहिवह्निविधेयकानुमितिप्रयोजकसामग्रीत्वेन यद्वा लिङ्गविशिष्टपर्वतविशेष्यक-वह्निनिश्चयाभाव-विशिष्टत्वेन रूपेण एव प्रतिबन्धकत्वात् = प्रतिबन्धकत्वस्वीकारात् न उक्तदोषः = प्रतिबन्धकताद्वयकल्पनलक्षणो दोषः सम्भवति इति चेत् ?

लिङ्गानुपहितलैङ्गिकभानवादी तन्निराकरोति- नेति। उक्तरीत्या भिन्नविषयकप्रत्यक्षं प्रति लिङ्गविशिष्टपर्वतविशेष्यक-वह्निनिश्चयाभावविशिष्टत्वेन रूपेण प्रतिबन्धकत्वोपगमे लिङ्गान्तरविशिष्टपर्वतत्वसामानाधिकरण्येन = वह्निव्याप्यालोकादिविशिष्टपर्वतत्वसामानाधिकरण्येन दहनानुमितिर्नोपजायेत, वह्निव्याप्यविशिष्टपर्वतत्वसामानाधिकरण्येन दहननिश्चयस्य सत्त्वेन विभिन्नविषयप्रत्यक्षस्य प्रतिबध्यताकोटिबहिर्भूतत्वात्, युगपज्ज्ञानद्वयोत्पादानभ्युपगमात्। ततश्च तदानीं लिङ्गान्तरविशिष्टपर्वतत्वसामानाधिकरण्येन अनुमित्यनुदयापत्तिवारणाय = 'वह्निव्याप्यालोकविशिष्टपर्वतो वह्निमानि'त्यनुमित्यनुदयप्रसङ्गनिराकरणकृते तत्तत्सिद्ध्यभावादिघटिततत्तद्रूपेण=वह्निव्याप्यालोकविशिष्टपर्वतत्वसामानाधिकरण्यावगाहिनिश्चयाभावविशिष्ट-पर्वतपक्षकालोकपरामर्शत्वादिना रूपेण विभिन्नविषयकप्रत्यक्षं प्रति प्रतिबन्धकत्वावश्यकत्वात् = प्रतिबन्धकत्वकल्पनाया आवश्यकत्वेन नानाप्रतिबन्धकताकल्पनागौरवात्। 'वह्निव्याप्यधूमवान् पर्वतो वह्निमानि'तिनिश्चयदशायां 'पर्वतो वह्निव्याप्यालोकवानि'तिपरामर्शात् 'वह्निव्याप्यालोकवान् पर्वतो वह्निमानि'त्यनुमितेरभीष्टत्वेन वह्निव्याप्यालोकविशिष्टपर्वतत्वसामानाधिकरण्येनानुमितिं प्रति न वह्निव्याप्यधूमविशिष्टपर्वतत्वसामानाधिकरण्येन वह्निनिश्चयस्य प्रतिबन्धकता स्वीकर्तुमर्हति। ततः तादृशानुमितिं प्रति वह्निव्याप्यालोकविशिष्टपर्वतत्वसामानाधिकरण्येन वह्निनिश्चयस्यैव प्रतिबन्धकता वाच्या। एवं वह्निव्याप्यधूमविशिष्टपर्वतत्वसामानाधिकरण्येनानुमितिं प्रति वह्निव्याप्यधूमविशिष्टपर्वतत्वसामानाधिकरण्येन दहननिश्चयस्य प्रतिबन्धकता वाच्या। तत्तत्सिद्धिविरहस्य तत्तदनुमितौ कारणत्वात् विभिन्नविषयकप्रत्यक्षं प्रति तत्तत्सिद्धिविरहविशिष्टतत्तत्परामर्शत्वेन नानाप्रतिबन्धकतागौरवमनिवार्यमेव लिङ्गोपहितलैङ्गिकभानवादिनये। किञ्चैवमपि 'वह्निव्याप्यधूमवान् पर्वतो वह्निमानि'तिनिश्चयसत्त्वे 'वह्निव्याप्यधूमवान् पर्वतो वह्निव्याप्यालोकवानि'ति परामर्शात् 'वह्निव्याप्यालोकवान् वह्निव्याप्यधूमविशिष्टपर्वतो वह्निमानि'त्यनुमितिर्न सम्भवेत्, तस्या वह्निव्याप्यधूमविशिष्टपर्वतत्वसामानाधिकरण्यावगाहित्वेन तत्प्रतिबध्यतावच्छेदकाक्रान्तत्वात्। ततश्च पर्वते तदानीं तदनुत्पत्तिवारणाय तल्लिङ्गकानुमितौ तल्लिङ्गविशिष्टपर्वतत्वसामानाधिकरण्येन निश्चयस्य प्रतिबन्धकता वाच्या। ततश्च भिन्नविषयकप्रत्यक्षनिरूपिताया प्रतिबन्धकताया महागौरवापत्तिः। न च फलाभिमुखत्वेन तद्दोषत्वमिति वाच्यम् तन्निश्चयपूर्वमेव गौरवोपस्थितेः फलमुखत्वकल्पनाया अयोगात्, प्रयोजनविरहेणानुमितौ लिङ्गविषयकत्वकल्पने मानाभावाच्चेत्यादिसूचनाय दिगित्युक्तं प्रकरणकृता।

## ▶ वल्लभा ◀

### एकविध प्रतिवन्धकता की आशङ्का और परिहार

लिङ्गोपहितलैङ्गिकभानवादीः अथ०। हमारे मतानुसार परामर्श 'वह्निव्याप्यधूमवान् पर्वतो वह्निव्याप्यधूमवान्' इत्याकारक हो या 'पर्वतो वह्निव्याप्यधूमवान्' इत्याकारक हो मगर अनुमिति तो 'वह्निव्याप्यधूमवान् पर्वतो वह्निमान्' इत्याकारक ही होगी जिसका प्रतिवन्धक केवल 'वह्निव्याप्यधूमवान् पर्वतो वह्निमान्' इत्याकारक निश्चय ही होता है। अतः लिङ्गविशिष्टपर्वतत्वसामानाधिकरण्येन परामर्श से घटित सामग्री एवं शुद्धपर्वतत्वसामानाधिकरण्येन परामर्श से घटित अनुमितिसामग्री लिङ्गविशिष्टपर्वतत्वसामानाधिकरण्यावगाहिनिश्चयाभावविशिष्टत्वेन रूपेण ही विभिन्नविषयक प्रत्यक्ष के प्रति प्रतिवन्धक मानी जाती है। विभिन्नविषयकप्रत्यक्षप्रतिवन्धकतावच्छेदक धर्म एक ही होने से द्विविध प्रतिवन्धकता की कल्पना अनावश्यक बनती है। इसलिए अनेक प्रतिवन्धकता के गौरव को जिसका आपादन लिङ्गानुपहितलैङ्गिकभानवादी ने अभी किया था, अवकाश नहीं है।

लिङ्गानुपहितलैङ्गिकभानवादीः- न, लि०। जनाव ! जैसे साबुन से धोने से भी कोयला उजला होता नहीं है ठीक वैसे आपका मत प्रयास करने पर भी गौरवमलमुक्त हो नहीं पाता। इसका कारण यह है कि विभिन्नविषयकप्रत्यक्ष के प्रति लिङ्गविशिष्टपर्वतत्वसामानाधिकरण्येन निश्चयाभावविशिष्टत्वेन रूपेण अनुमितिसामग्री को प्रतिवन्धक मानी जाय तब तो 'वह्निव्याप्यधूमवान् पर्वतो वह्निमान्' इत्याकारक सिद्धि होने पर आलोकपरामर्श से 'वह्निव्याप्यालोकवान् पर्वतो वह्निमान्' इत्याकारक अनुमिति भी हो नहीं सकेगी, क्योंकि तब वह्निव्याप्यविशिष्टपर्वतत्वसामानाधिकरण्येन निश्चयाभावविशिष्ट अनुमितिसामग्री का अभाव नहीं होने की वजह प्रतिवध्यताकोटि से विनिर्मुक्त ऐसे विभिन्नविषयक प्रत्यक्ष का ही उदय हो जायेगा। दो ज्ञान तो एक साथ उत्पन्न हो नहीं सकते हैं, जिससे विभिन्नविषयक प्रत्यक्ष और अभिमत अनुमिति दोनों का एक साथ उदय हो सके। इसलिए तब आलोकलिङ्गक वह्निअनुमिति के अनुदय की आपत्ति के निवारणार्थ लिङ्गोपहितलैङ्गिकभानवादी को यही मानना होगा कि—> वह्निव्याप्यालोकविशिष्टपर्वतत्वसामानाधिकरण्यावगाहिनिश्चयाभावविशिष्टआलोकपरा-

यत्तु ''यत्र 'वह्निव्याप्यधूमवानि'तिपरामर्शोऽप्रामाण्यग्रहग्रस्तस्तदुत्तरतद्वाधधीस्तदुत्तरानुमितिजनकपरामर्शेऽप्रामाण्यज्ञानाभाववैशिष्ट्यादाने लिङ्गोपहितलैङ्गिकभानवादिना मते लाघव तादृशानुमितेः बाधज्ञानप्रतिबन्धादेवानुदयादिति, तच्चिन्त्यम्, तथापि ततो

◆ हेमलता ◆

यत्तु यत्र स्थले 'वह्निव्याप्यधूमवानि'तिपरामर्श अप्रामाण्यग्रहग्रस्त = 'पर्वतविशेष्यक-वह्निव्याप्यधूमप्रकारकनिश्चयो न प्रमाण' इति प्रामाण्याभावज्ञानास्कन्दित' तदुत्तर अवश्यमेव 'पर्वतो न वह्निव्याप्यधूमवान्' इत्याकारिका तद्बाधधी = हेत्वभावनिश्चितिः उपजायते। निरुक्तहेत्वभावनिश्चयादेवानुमितेः प्रतिबन्धान्न परामर्शेऽप्रामाण्यज्ञानानास्कन्दितत्वस्य विशेषणविधया निवेशः क्रियते इति तदुत्तरानुमितिजनकपरामर्शे = हेत्वभावनिश्चयोत्तरानुमितिजनकपरामर्शे अप्रामाण्यज्ञानाभाववैशिष्ट्याऽदाने = अप्रामाण्यज्ञानानास्कन्दितत्वस्याऽनिवेशेन लिङ्गोपहितलैङ्गिकभानवादिना मते लाघव = कारणतावच्छेदकधर्मशरीरलाघवम्, तादृशानुमिते = 'वह्निव्याप्यधूमवान् पर्वतो वह्निमान्' इत्यनुमितेः बाधज्ञानप्रतिबन्धात् = 'पर्वतो न वह्निव्याप्यधूमवान्' इतिहेत्वभावनिश्चयेनैव प्रतिबध्यत्वात्। अनेन तादृशपरामर्शेऽप्रामाण्यज्ञानानास्कन्दितत्वनिवेशानावश्यकत्वे हेतुः प्रदर्शितः। अत एव गृहीतप्रामाण्यकपरामर्शकालेऽनुमितिवारणाय नाप्रामाण्यज्ञानाभावस्य परामर्श-विशेषणविधया निवेश आवश्यकः, दर्शितरीत्यैव तदनुदयोपपत्तेः। लिङ्गानुपहितलैङ्गिकबाभानवादिना तु तादृशपरामर्शेऽप्रामाण्यग्रहाभाववैशिष्ट्य न निवेश्यते तदा 'पर्वतो वह्निमानि'त्यनुमितिस्स्यादेव, 'पर्वतो न वह्निव्याप्यधूमवान्' इति बाधज्ञानस्य ग्राह्याभावानवगाहित्वे तद्विरोधित्वासम्भवात्। तन्निवेशे च कारणतावच्छेदकधर्मशरीरगौरवमनिवार्यमेव लिङ्गानुपहितलैङ्गिकभानवादिमत इति लिङ्गोपहितलैङ्गिकभानवादितात्पर्यम्।

प्रकरणकारोऽत्रास्वरसप्रदर्शनायाह- तच्चिन्त्यमिति । चिन्ताबीजमेवावेदयति- तथापि तत 'पर्वतो न वह्निव्याप्यधूमवान्' इति बाधज्ञानात्

▶ वल्लभा ◀

मर्शत्व, वह्निव्याप्यधूमविशिष्टपर्वतविशेष्यक-वह्निसिद्धिविरहविशिष्ट-पर्वतविशेष्यक-धूमपरामर्शत्व आदि विभिन्नधर्मेण अनुमितिसामग्री भिन्नगोचर प्रत्यक्ष की प्रतिबन्धक है - ऐसा मानने पर धूमविशिष्टपर्वत मे वह्निनिश्चय होने पर भी आलोकपरामर्श से 'वह्निव्याप्यालोकवान् पर्वतो वह्निमान्' इत्याकारक अनुमिति हो सकेगी, क्योकि तब न तो अनुमितिसामग्री मे वह्निव्याप्यालोकविशिष्टपर्वतत्वसामानाधिकरण्यावगाहिनिश्चयविशिष्ट-पर्वतविशेष्यकालोकपरामर्शत्व है और न तो वह्निव्याप्यधूमविशिष्टपर्वतत्वसामानाधिकरण्यावगाहिवह्निनिश्चयविशिष्टपर्वतपक्षक-धूमपरामर्शत्व है। इसलिए तब भिन्नविषयक प्रत्यक्ष की प्रतिबन्धकता के अवच्छेदक धर्म से विशिष्ट अनुमिति की सामग्री तब सम्पन्न होने से प्रत्यक्ष के उदय की कोई सम्भावना नही है। मगर ऐसा स्वीकार करने पर लिङ्गोपहितलेङ्गिकभानवादी के मत मे अनेकविध प्रतिबन्धकता का गौरव तो अपरिहार्य हो जायेगा। मतलब कि गौरवग्रस्त होने से लिङ्गोपहितमत त्याज्य हे। यहॉ जो कहा गया है वह तो दिग्दर्शनमात्र है। इसके मुताबिक आगे बहुत कुछ सोचा जा सकता हे-इस वस्तुस्थिति के सूचनार्थ प्रकरणकारश्री ने 'दिक्'शब्द का प्रयोग किया है।

## ▶ लिङ्गानुपहितपक्ष मे गौरव का आपादन एव निराकरण ◀

यत्तु०। कुछ लिङ्गोपहितलेङ्गिकभानवादी का यह कथन है कि →''जब स्थलविशेष मे 'पर्वतो वह्निव्याप्यधूमवान्' इत्याकारक परामर्श मे अप्रामाण्य का ज्ञान होने के पश्चात् 'पर्वतो न वह्निव्याप्यधूमवान्' ऐसी बाध बुद्धि उत्पन्न होती हे उसके उत्तरकाल मे होनेवाली अनुमिति के जनक परामर्श मे अप्रामाण्यग्रहाभाववैशिष्ट्य का निवेश अनावश्यक होने से लिङ्गोपहितलैङ्गिकभानवादी के मत मे लाघव ह, क्योकि हमारे मतानुसार 'वह्निव्याप्यधूमवान् पर्वतो वह्निमान्' इत्याकारक अनुमिति का प्रतिरोध ग्राह्याभावावगाही 'पर्वतो न वह्निव्याप्यधूमवान्' इस बाधनिश्चय से ही हो जाता है। आशय यह है कि- 'पर्वतो वह्निव्याप्यधूमवान्' यह परामर्श अप्रामाणिक है - ऐसा ज्ञान होने से अनायास ही 'पर्वतो न वह्निव्याप्यधूमवान्' यह बाधबुद्धि उसके अनन्तर उत्पन्न होती है। हमारे मतानुसार लिङ्ग का अनुमिति मे भान होने से लिङ्गाभावनिश्चयात्मक प्रदर्शित बाधज्ञान उस अनुमिति का विरोधी होता है। इसलिए तब अनुमिति के वारणार्थ परामर्श मे अप्रामाण्यज्ञानानास्कन्दितत्व विशेषण के निवेश की आवश्यकता न होगी। मगर अनुमिति मे लिङ्ग का भान न मानने पर तो 'पर्वतो न वह्निव्याप्यधूमवान्' इत्याकारक बाधनिश्चय होने पर भी 'पर्वतो वह्निमान्' इत्याकारक अनुमिति की आपत्ति होगी, क्योकि अनुमिति लिङ्गावगाही नही होने की वजह उपदर्शित बाधबुद्धि उसकी विरोधी नही होगी। अत तब लिङ्गानुपहितलेङ्गिकभानवादी के मतानुसार अनुमितिजनक परामर्श मे अप्रामाण्यज्ञानानास्कन्दितत्व का विशेषणविधया निवेश करना आवश्यक होगा, जिसके फलस्वरूप जिसके अप्रामाण्य का ज्ञान हो गया है ऐसे परामर्श से अनुमिति के उदय की आपत्ति नही होगी, क्योकि वह परामर्श कारणतावच्छेदकीभूत गृहीताप्रामाण्यकभेद=अप्रामाण्यग्रहाभाव से विशिष्ट नही है। इसलिए लिङ्गानुपहितलेङ्गिकभानवादी नैयायिकानुयायी के मत मे कारणतावच्छेदकधर्मशरीर मे गोरव प्रसक्त होगा''←

मगर प्रकरणकार श्रीमद्जी का कहना हे कि उपर्युक्त लिङ्गोपहितलैङ्गिकभानवादी का वक्तव्य चिन्तनीय है न कि बिना विचार के ग्राह्य। इसका कारण यह है कि 'वह्निव्याप्यधूमवान् पर्वतो न वह्निमान्' इत्याकारक अनुमिति का प्रतिरोध 'पर्वतो न वह्निव्याप्यधूमवान्'

सति 'अन्धकारवानहमि'ति प्रतीत्यापत्तिः । न च सम्बन्धविशेषेणालोकज्ञानाभाववत्येव तमःप्रतीतिनियमान्नाय दोष इति वाच्यम् तथा सत्यालोकज्ञानाभाववानहमिति प्रतीतेरपि विलयापत्तेः । किञ्चैवं तमसश्चाक्षुषत्वं न स्यात्, ज्ञानाभावस्य मानसत्वात् । तथा च 'तमः पश्यामी'ति प्रतीतिः कथमुपपादनीया ?

## ◆ हेमलता ◆

पुरुपादैः प्रथममालोकाऽग्रहे 'नील तमः' इति धीः । तदुक्त 'अप्रतीतावेव प्रतीतिभ्रमो मन्दानाम्'[ ] इति प्रभाकराशयः ।

तन्निराकरोति - तत्तुच्छमिति । एव सति = तमस उपलब्धियोग्यालोकदर्शनाभावात्मकत्वे सति, 'अन्धकारवानहमि'ति प्रतीत्यापत्ति, ज्ञानत्वावच्छिन्नस्याऽऽत्मनि समवायसम्बन्धेन जायमानतया उपलब्धियोग्यालोकदर्शनाभावलक्षणान्धकारस्याऽप्यात्मवृत्तित्वौचित्यात् । 'अन्धकारवद्भूतलमि'-तिप्रतीतेरप्रामाण्यापत्तिरप्युपलक्षणाद् बोद्धव्या ।

ननु समवायसम्बन्धावच्छिन्नप्रतियोगिताकालोकदर्शनाभावस्य तमस्त्वमस्माभिर्नाङ्गीक्रियते येन तद्वत्यात्मनि तत्प्रतीतिप्रसङ्गः किन्तु स्वनिरूपितालोकनिष्ठप्रकारतानिरूपितविशेष्यता - स्वनिरूपितालोकनिष्ठविशेष्यतानिरूपिताधेयतासम्बन्धावच्छिन्नप्रकारतान्यतरसम्बन्धावच्छिन्नप्रतियोगिताकचाक्षुषाभावस्यैव तमस्त्वमभ्युपगम्यते । 'आलोकवान् देशः' इतिप्रतीतिः प्रथमसम्बन्धेन देशे वर्तते 'अत्र देशे आलोक' इतिप्रतीतिश्च द्वितीयसम्बन्धेन । यत्र तु निरुक्तान्यतरसम्बन्धेन तादृशचाक्षुषप्रतीतिर्नैव वर्तते तत्रैव तमःप्रतीतिर्भवतीति नियमः । आत्मनि तु समवायसम्बन्धावच्छिन्नप्रतियोगिताकालोकचाक्षुषाभावो वर्तते न तूक्तान्यतरसम्बन्धावच्छिन्नप्रतियोगिताकालोकदर्शनाभाव इति 'अन्धकारवानहमि'तिप्रतीतेर्नैव प्रसङ्गः इति प्राभाकराशय दूषयितुमुपन्यस्यति न चेति । वाच्यमित्यनेनास्यान्वयः । विभावितार्थमेवेदम् । तदयुक्तत्वे हेतुमाह - तथा सति = 'दर्शितान्यतरसम्बन्धावच्छिन्नप्रतियागिताकालोकदर्शनाभाववत्येवान्धकारप्रतीतिव्यवहारनियमोपगमे सति, 'आलोकज्ञानाभाववानहमि'तिप्रतीतेरपि विलयापत्ते । अपिशब्दो गर्हार्थः । न हि आलोकज्ञानाभावत्व तमस्त्वादिदानीमतिरिच्यते । उक्तान्यतरसम्बन्धावच्छिन्नालोकदर्शनत्वाच्छिन्नप्रतियोगिताकाभावत्वलक्षणतमस्त्ववदाश्रयत्व नात्मनः किन्तु भूतलादेरेवेति न कदापि 'आलोकदर्शनाभाववानहमि'तिप्रतीतिः स्यात् । एतेन विषयतासम्बन्धावच्छिन्नप्रतियोगिताकस्यापि तस्य तमस्त्व प्रत्याख्यातम्, भूतलादेरेव विषयतासम्बन्धावच्छिन्नप्रतियोगिताकालोकदर्शनाभावत्वलक्षणतमस्त्ववदाश्रयत्वेन 'आलोकदर्शनाभाववानहमि'ति प्रतीतेरनुपपत्तेः ।

दोषान्तरसमुच्चयार्थमाह- किञ्चेति । एव = तमस उपलब्धियोग्यालोकचाक्षुषाभावत्वाङ्गीकारे, तमस चाक्षुषत्व न स्यात्, ज्ञानस्य मानसत्वेन ज्ञानाभावस्य मानसत्वात् = मानससाक्षात्कारविषयत्वात् । 'यो यदिन्द्रियेण गृह्यते तदभावस्तद्गता जातिरपि तेनैवेन्द्रियेण गृह्यते' इति नियमेनालोकज्ञानस्य मनोमात्रग्राह्यत्वेन तदभावस्यापि मनोमात्रग्राह्यतैव स्यात् न तु चक्षुर्ग्राह्यत्वम् । तथा च आलोकज्ञानाभावलक्षणस्य तमसो मानसत्वेऽभ्युपगम्यमाने 'तम पश्यामी''ति प्रतीति कथ प्रमात्वेन उपपादनीया ?

एतेन तदंशेऽलौकिकचाक्षुषमपि प्रत्युक्तम् बहिरिन्द्रियजन्यज्ञाने उपनीतस्य विशेषणतयेव भाननियमात् 'नील तमः' इतिप्रतीत्यनापत्तेश्च । एतेन 'नील तम' इति धीस्तु स्मृतनीलिम्ना सममालोकज्ञानाभावस्याऽससर्गग्रहादित्यपि निरस्तम् तथाननुभवात्, अप्रामाणिकगौरवात्, अस्खलद्वृत्तेश्च तस्या 'इद रजतमि'त्यादिप्रतीतिवदससर्गाग्रहेणोपपादनासम्भवात् । सौरालोकाद् मध्यन्दिने आलोकवद्गभगृह प्रविशतः तमःप्रत्ययश्च भ्रम एव, आलोकज्ञानप्रतिबन्धकदोषस्य तत्र स्वीकारावश्यकत्वादिति व्यक्त स्याद्वादकल्पलतादौ ।

## ► वल्लभा ◄

ज्ञानाभावत्मक होता तब तो 'अन्धकारवान् अह' यह प्रतीति प्रसक्त होती, क्योंकि आलोकज्ञान आत्मा मे रहने की वजह आलोकज्ञानाभावात्मक अन्धकार भी वही रहेगा । जो समवाय सम्बन्ध से जहाँ उत्पन्न होता ह उसका अभाव भी वहीं रह सकता है । मगर अन्धकार का व्यवहार तो बाहर भूतल आदि मे होता है ।

यदि बचाव के लिये प्रभाकर अनुयायी की ओर से यह कहा जाय कि → 'सम्बन्धसामान्य से आलोकज्ञानाभावाश्रय मे अन्धकार का व्यवहार नही होता किन्तु सम्बन्धविशेष से आलोकज्ञानाभाववान् मे अन्धकार की प्रतीति एव व्यवहार होता है । इसलिये 'अन्धकारवान् अह' इस आपत्ति को अवकाश रहता नहीं है । आशय यह ह कि स्वीय आलोकनिष्ठप्रकारतानिरूपितविशेष्यता एव स्वीयआलोकनिष्ठविशेष्यतानिरूपितआधेयत्वसम्बन्धावच्छिन्नप्रकारता इन दोनो सम्बन्धो मे से किसी सम्बन्ध से आलोकदर्शन का न होना अर्थात् उक्तविशेष्यता - उक्तप्रकारता - एतदन्यतरसम्बन्धावच्छिन्नप्रतियागिताकदर्शनाभाव ही तम है । जिस देश मे 'आलोकवान् अय देश ' इस प्रकार आलोकज्ञान होगा उस देश मे उक्त विशेष्यतासम्बन्ध से यह ज्ञान रहेगा, क्योंकि उक्त ज्ञान मे आलोक है प्रकार और देश है विशेष्य । अत उक्त विशेष्यता सम्बन्ध मे स्वशब्द से उक्त ज्ञान को लेने पर उक्त ज्ञान स्वीयालोकनिष्ठप्रकारतानिरूपितविशेष्यतासंसर्ग से देश मे रहेगा और जब देश मे 'अत्र देशे आलोक ' इस प्रकार आलोकज्ञान होगा तब यह ज्ञान उक्त प्रकारता सम्बन्ध से

ननु तमसोऽभावत्वे गतेः का गतिरिति चेत् ? भ्रान्तिरित्यवेहि, स्वाभाविकगतेरन्यगत्यनुविधानानुपपत्तेः ।

◆ हेमलता ◆

केचित्तु 'प्रभाकरमतेऽतिरिक्तोऽभाव एव नास्ति किन्तु 'घटो नास्ती'ति ज्ञानमेव घटाभावः । अत एव प्रभाकरस्यापि 'गुरुर्गेयमभावस्य स्थाने स्थानेऽभिषिक्तवान् । प्रसिद्ध एव लोकेऽस्मिन् बुद्धबन्धुः प्रभाकरः ॥' इत्येवमुपहासः । तथा चालोकाभावज्ञानमेव तमः' इति वस्तुमुचितम् । यदि चालोकज्ञानाभाव इत्यस्यालोकज्ञानान्यज्ञानमित्यर्थस्तदा रूपादिज्ञानमपि तम इति तत्सत्त्वेऽपि तस्य स्वस्य प्रकाशत्वात् स्वसंवेदनरूपज्ञानमादाय तमोबुद्धिः स्यात् । आलोकज्ञानरूपेणाऽपरिणतस्यात्मनस्तमोरूपत्वेऽप्युक्तापत्तिस्तदवस्थैवेति आलोकाभावज्ञानस्य तमोरूपत्वे तु नोक्तदोष' इति विवृण्वन्ति । तच्चिन्त्यम् ।

शङ्कते- ननु तमसोऽभावत्वे गतेः = 'तमश्चलती'ति गतिप्रत्ययस्य का गतिः ? इति चेत् ? नैयायिकः समाधत्ते → भ्रान्तिरित्यवेहि । 'तमश्चलती'तिगतिप्रतीतिः भ्रमात्मिकेत्यर्थः । स्वाभाविकगतेः = स्वसमवेतगतेः, अन्यगत्यनुविधानानुपपत्तेः । यथा स्फटिके जपाकुसुमसम्बन्धात् लौहित्यप्रत्ययः तथा प्रतियोगिस्वरूपालोकसम्बन्धात् तमसि आलोकसमवेतगतिस्मर्तविषयिणी तादृशप्रतीतिः, आलोकापसरणनिमित्तकत्वेन तस्या भ्रमत्वम् । तमःसमवेतगतिक्रियाप्रतीतौ तत्रालोकापसरणमृतेऽपि तदुपलम्भप्रसङ्गः । न च तथाऽस्तीति तद्गतेः औपाधिकत्वमेवेति । तदुक्तं किरणावल्यां उदयनाचार्येण 'आवरकद्रव्ये गच्छति यत्र यत्र तेजसोऽसन्निधिः तत्र तत्र छायाग्रहणात् अन्यदेशतानिबन्धनो गतिभ्रम इति । कथं भावरूपाध्यारोपोऽभावे इति चेत् ? न किञ्चिदेतत् । सारूप्यतत्त्वाग्रहावेव निबन्धनं न त्वन्यत्' [कि.पृ. ७८] इति ।

वस्तुतो नैतद्युक्तम् यतः प्रतीतेः भ्रमत्वं तत्रैव स्वीक्रियते यत्रोत्तरकाले बाधज्ञानं यथा 'इदं रजतमि'ति भ्रमानन्तरं 'नेदं रजतमि'ति बाधनिश्चयादेव पूर्वतनप्रतीतेः भ्रमत्वमुपकल्प्यते न तूत्तरकाले बाधनिश्चयाभावे, अन्यथा घटादिविषयकप्रतीतीनामपि भ्रमत्वकल्पनापत्त्या शून्यवादप्रसक्तिः । प्रकृते च 'तमश्चलती'ति प्रत्ययानन्तरं 'तमो न चलती'ति बाधज्ञानविरहात् कथं प्रतीतेः भ्रमत्वम् । किञ्च स्वाभाविकगतेराश्रयगत्यननुविधाननियमोऽपि न प्रामाणिकः, पद्मरागप्रभाया व्यभिचारात् । यथा पद्मरागप्रभा स्वाभाविकगतिशालिनी तेजस्त्वात् अथ च स्वाश्रयगत्युत्पत्त्यनन्तरमेव तद्गतिप्रत्ययः तत्कर्मोत्पादस्याश्रयकर्मोत्पादसमनियतत्वात् । तथैव तमोगत्युत्पादस्याप्यालोकादिगत्युत्पादसमनियतत्वादालोकादिगत्युत्पत्त्यनन्तरमेव तमोगतिप्रतीतिरप्युपपद्यते । एतेन स्वाभाविक्या गतावावरकद्रव्यानुविधानानुपपत्तेः । प्रभातुल्यत्वे तेजःप्रभाश्रयेषु रत्नादिदीपेषु छाया दिवसे न स्यात् । छाययैव तदभिभवे बहुलतमे तमसि तेषामालोको न स्यात् । आलोकान्तरेण चाभिभवे छायाया अप्युद्भवो न स्यादिति किरणावलीकृत उदयनाचार्यस्य [द्रव्यता कि पृ ७३] वचनमपहस्तितम्, यदा आवरकमणीनां क्रियादिक्रमेण भूतलादिसंयोगस्तदैव तच्छायाया अपि क्रियादिक्रमेण भूतलादिसंयोगोपपत्तेः ।

▶ वल्लभा ◀

देश में रहेगा, क्योंकि इस दर्शन में विशेष्य है आलोक और देश उसमें आधेयता सम्बन्ध से प्रकार है । अतः उक्त प्रकारता सम्बन्ध से 'स्व' पद से इस ज्ञान को लेने पर यह ज्ञान देश में उक्तप्रकारतासम्बन्ध से रहेगा । जिस देश में जब उक्त ज्ञानों में से कोई भी ज्ञान नहीं रहेगा तब उस देश में उक्त विशेष्यता एवं उक्त प्रकारता दोनों ही सम्बन्ध से अवच्छिन्न प्रतियोगिता का निरूपक आलोकज्ञानाभाव रहेगा । अतः वैसी स्थिति में वहाँ अन्धकारव्यवहार एवं अन्धकारज्ञान होगा । आत्मा में उक्त आलोकज्ञानाभाव नहीं रहने से 'अहं अन्धकारवान्' इस प्रतीति की आपत्ति नहीं है'← तो यह भी ठीक नहीं है, क्योंकि तब तो 'अहं आलोकज्ञानाभाववान्' इस प्रकार की प्रतीति भी विलीन हो जायेगी । अनुपपन्न बनेगी । बकरी को निकालने पर आँगन ऊँट से घुस जायेगा ।

किञ्च० । इसके अतिरिक्त प्रभाकरमत में दोष यह है कि - अन्धकार चाक्षुष प्रतीति का विषय नहीं बन सकेगा, क्योंकि ज्ञान मानस साक्षात्कार का विषय होने से आलोकज्ञानाभावात्मक अन्धकार भी मानस प्रत्यक्ष का ही विषय बनेगा । मगर तब 'तमः पश्यामि' = 'मैं अन्धकार को देखता हूँ' यह सर्वसम्मत प्रतीति की उपपत्ति कैसे हो सकेगी ? इसलिये अन्धकार को आलोकज्ञानाभावात्मक नहीं माना जा सकता - यह फलित होता है । अन्धकार को आलोकाभावात्मक मानना सङ्गत है ।

●● अन्धकार में गति आरोपित - नैयायिक ●●

ननु त० । यहाँ इस शङ्का का कि → 'यदि अन्धकार आलोकाभावात्मक होगा तो 'अन्धकार आगत' 'तमः गतम्' इत्यादि प्रतीति की उपपत्ति कैसे होगी ? क्योंकि गति-आगति आदि क्रिया केवल द्रव्य में ही मुमकिन है'← समाधान यह है कि 'तम आगत गत' इत्यादि प्रतीति होती है वह भ्रान्ति ही जाननी चाहिए, क्योंकि अन्धकार को द्रव्य मान कर उसमें स्वाभाविक गति मानने पर उसकी गति में आश्रय की गति का अनुविधान नहीं होने का नियम टूट जायेगा । वाहन आदि में बैठनेवाले पुरुष आदि को वाहन गतिमान होने पर दूरस्थ वृक्ष आदि में जिस गति का भान होता है वह गति वाहन की गति का अनुसरण करती है, न कि वह गति स्वाभाविक है । अतएव तब 'वृक्ष चलति' यह प्रतीति जैसे भ्रमात्मक होती है ठीक वैसे ही प्रकाशक

अथात्यन्ताभावत्वे तमस उत्पत्तिविनाशप्रत्ययो भ्रमः स्यादिति चेत् ? स्यादेव । आलोकप्रागभावप्रध्वसात्यन्ताभावसमुदायरूपस्य तमसः किञ्चित्समुदायिप्रागभावप्रध्वसावेव समुदायप्रागभावप्रध्वसप्रतीतिरवगाहते इति तु प्राञ्च ।

एव नीलरूपवत्त्वधीरपि तत्र भ्रान्तैव, दोपस्तु तत्र तमःस्वरूपमेव । न चैव पीतरूपाद्यारोपप्रसङ्गः, आरोपे सति

---

◆ हेमलता ◆

अनेन आवरकमणीना गत्यभावेन तच्छायाया अपि भूतलादिसयोगजनकगत्यसम्भव इति प्रत्युक्तम् । आश्रयस्य स्थिरत्वेऽपि कुड्याद्यावरणभङ्गे तन्नियमभङ्गस्य च प्रभायामिव छायादावपि तुल्यत्वादिति ।

अस्तु वाऽत्राऽऽरोपिता गतिस्तथापि भावरूपता दुरपह्नवा । तदुक्त स्याद्वादरत्नाकरे 'भावरूपा छाया अध्यारोप्यमाणगतित्वात् वृक्षवत्' [प्र न त ५-८ स्या र पृ ८५३] इति।

शङ्कते - अथ अत्यन्ताभावत्वे तमस 'तम उत्पन्न', 'तमो नष्टमि'त्याकारकः उत्पत्तिविनाशप्रत्ययो भ्रम स्यात्, अत्यन्ताभावस्य नित्यत्वेनोत्पादव्ययप्रतियोगित्वासम्भवादिति चेत् ?

इष्टापत्तितया नैयायिकः तदभ्युपगच्छति स्यादेव । तमःसम्भवभङ्गभानस्य भ्रमत्वमभिमतमेव नैयायिकानामित्याशयः ।

तमसो नालोकात्यन्ताभावरूपतैव किन्त्वालोकससर्गाभावात्मकता, आलोकप्रागभाव-प्रध्वसात्यन्ताभावसमुदायरूपस्य = महदुद्भूतानभिभूतरूपवदालोकप्रागभाव-तत्प्रध्वस-तदत्यन्ताभावाना कूटात्मकस्य तमस किञ्चित्समुदायिप्रागभावप्रध्वसावेव समुदायप्रागभावप्रध्वसप्रतीति = निरुक्तालोकप्रागभाव-प्रध्वसात्यन्ताभावसमूहात्मकान्धकारविशेष्यिका प्रागभाव-प्रध्वसप्रतीतिः अवगाहते । उपदर्शितसमूहात्मकान्धकारघटकीभूतालोकध्वसोत्पादे 'अन्धकार उत्पन्न' इतिधीर्जायते । तद्घटकालोकप्रागभावनाशे सति 'तमः नष्टमि'तिबुद्धिः सम्पद्यते । अतो न तमस्युत्पादव्ययप्रतीत्यनुपपत्तिः यथा राशिषु किञ्चित्समुदायिव्यतिरेकप्रयुक्त एव विनाशः एवमुत्पादोऽपि इति तु प्राञ्च शशधरशर्मादय न्यायसिद्धान्तदीपादौ वदन्ति ।

वस्तुगत्या नेदमपि युज्यते - राशिषु बहुत्वविशेषनाशोत्पादाभ्या तदाश्रयनाशोत्पादप्रतीत्युपपत्तावपि प्रकृते तदयोगात्, समूहविलक्षणमहदेकोत्पादाद्यनुभवाच्च ।

नैयायिक आह - एव = तमोगतिभ्रमवत् नीलरूपवत्त्वधीरपि तत्र = तमसि भ्रान्तैव = भ्रमात्मिकैव 'नील नभः' इतिप्रतीतिवत् । न च बाधकाभावात् कथ तस्या भ्रमत्वमिति वाच्यम् दोषजन्यत्वेन तस्या अप्रमात्वात् । भ्रमनिबन्धनः दोपस्तु तत्र = तमोनीलरूपप्रतीतो तम स्वरूपमेव । तमःस्वरूपस्य दोषत्वादेव तमसि नीलरूपमारोप्यते । न च एव =तमःस्वरूपस्यान्यरूपारोपनिबन्धनत्वे तमसि कदाचित् पीतरूपाद्यारोपप्रसङ्ग आरोपनिबन्धनस्य सत्त्वादिति वाच्यम् यत आरोपे सति हि = अवश्य निमित्तानुसरण = आरोपकारणत्व मार्गणीयम् ।

---

▶ वल्लभा ◀

आदि को गतिमान करने पर ही अन्धकार मे गति की उपलब्धि होती है । मतलब कि दीप आदि की गति का अनुविधान करने से वह अन्धकार की स्वाभाविक = स्वसमवेत गति नही है । अतएव 'तमश्चलति' इस प्रतीति तो भ्रमात्मक मानी जाती है ।

▶ अन्धकार मे उत्पादादिप्रतीति भ्रमात्मक - नैयायिक ◀

अथा० । यहाँ इस शङ्का का कि ⟶ 'अन्धकार को आलोक के अत्यन्ताभावस्वरूप मानने पर 'तम उत्पन्नम्', 'तमो विनष्टम्' इस प्रकार की अन्धकार की उत्पत्ति आदि की जो प्रतीति होती है वह प्रमात्मक नही किन्तु भ्रमात्मक हो जायेगी, क्योकि अत्यन्ताभाव नित्य होने से उसकी उत्पत्ति और उसका विनाश नामुमकिन है' ⟵ समाधान यह है कि 'तम उत्पन्न', 'तमो नष्ट' इत्यादि प्रतीति मे भ्रमत्व हम नैयायिक मनीषियो को अभिमत ही है। आपने पहली बार यह मनपसद बात हमको बताई है - तदर्थ धन्यवाद !

प्रस्तुत सन्दर्भ मे प्राचीन नैयायिको का यह कथन है कि ⟶ आलोक का केवल अत्यन्ताभाव ही तम नही है किन्तु आलोक के ससर्गाभाव का समुदाय अन्धकार है । इस समुदाय मे आलोक का प्रागभाव और आलोक का प्रध्वस भी प्रविष्ट हैं । आलोकप्रागभाव-आलोकध्वस-आलोकात्यन्ताभाव के समुदायात्मक अन्धकार के घटक आलोकध्वस की उत्पत्ति होने पर समुदाय की उत्पत्ति की और आलोक प्रागभाव का नाश होने पर समुदाय के नाश की प्रतीति ठीक उसी तरह उपपन्न की जा सकती है जैसे किसी राशि के कुछ अश का उत्पत्ति होने पर राशि की उत्पत्ति और राशि के कुछ अश का नाश होने पर उस राशि के नाश की प्रतीति होती है । समुदायी = अश के उत्पाद-नाश का अवगाहन समुदाय = आलोकससर्गाभावकूट मे होता है ।

☛ अन्धकार मे नीलरूपप्रतीति भ्रमात्मक - नैयायिक ☚

एव नी०। इस तरह अन्धकार आलोकाभावात्मक सिद्ध होने से उसमे जो नीलरूप की प्रतीति होती है वह भी भ्रान्त

हि निमित्तानुसरणं न तु निमित्तमस्तीत्यारोपः । इत्यन्धकारपदार्थविवेचनम् । पञ्चमो वादः सम्पूर्णः ॥५॥

◆ हेमलता ◆

न तु निमित्तमस्ति = यत्किञ्चिदारोपनिमित्तसत्त्वम् इति आरोप । तत्र नीलाद्यारोप एव न तु पीतरूपाद्यारोप' इति अत्र किं नियामक? इति पृच्छ्यते इति चेत्? उच्यते अदृष्टादिकमेवात्र नियामकमभ्युपेयम्। स्मर्यमाणञ्चैतत् रूपमारोप्यते, रजतत्ववत्, न गृह्यमाणम्। अतो न सहकार्यपेक्षाचोद्यमाशङ्कनीयम्, धर्मिणि निरपेक्षत्वादिति [कि पृ ७४] किरणावल्यां व्यक्तीकृतमुदयनाचार्येण।

वस्तुतो नेदमपि घटाकोटिमाटीकते - यत 'इदं नील' इत्यादिधिया भ्रमत्वं, तत्र 'नेदं नील' इत्यादिसाक्षात्कारे वस्तुस्वरूपस्याऽदृष्टविशेषस्य वा दोषस्य वा प्रतिबन्धकत्वं, तत्राप्यप्रामाण्यग्रहाभावविशिष्टतेजोऽभावत्वप्रकारकज्ञानादीनामुत्तेजकत्वं इत्यादिकल्पनाया महागौरवात्।

यत्तु 'गन्धसमवायिकारणतावच्छेदिकयैव नीलसमवायिकारणतावच्छेदात्तमसो नीलरूपवत्त्वे गन्धवत्त्वप्रसङ्गः'' [दृश्यतां १५३ तमे पृष्ठे] इत्युक्तं तन्न चारु, तादृशकार्यकारणभावे मानाभावात्। सामान्यतो जन्यसत्त्वावच्छिन्नं प्रति द्रव्यत्वेनैव समवायिकारणत्वात्, विलक्षणतेजःसंयोगादेवासमवायिकारणस्य असमवायिकारणविरहादेव जलादौ गन्धाद्युत्पत्तेरसम्भवात्। न च विलक्षणतेजःसंयोगस्य द्विष्ठतया तेजसि पाकजगन्धोत्पत्तिवारणाय तादृशकार्यकारणभावस्यावश्यकत्वमिति वक्तव्यम् विलक्षणतेजःसंयोगेन तेजस्त्वेनैव कारणत्वं तदपाकरणायोपगन्तव्यम्, पाकजगन्धस्याऽसमवायिकारणविरहेऽपि क्षतिविरहात्,

स्वीयसंयोगस्य स्वस्मिन् सत्त्वेऽपि संयोगसम्बन्धेन स्वस्य न स्वसम्बन्धित्वम्। न च गुरुत्वगुरुभिर्भेदेनोत्कर्षापकर्षभेदेन च विभिन्नानन्तकार्यकारणभावेषु अनन्तानां संयोगानां कारणतावच्छेदकसम्बन्धकल्पनामपेक्ष्य समवायसम्बन्धेन विलक्षणसंयोगत्वेन कारणत्वं कल्पयित्वा तेजसि गन्धोत्पादवारणाय सामान्यतो गन्धत्वावच्छिन्नं प्रति पृथिवीत्वेन समवायिकारणत्वमावश्यकमिति वाच्यम् तत्तद्व्यक्तिसमवेतसत्त्वावच्छिन्नं प्रति तत्तद्व्यक्तित्वेन समवायिकारणत्वस्यावश्यकतया तत एव तेजसि पाकजगन्धाद्युत्पत्तिकारणसम्भवात् यद्विशेषयोः कार्यकारणभावः स तत्सामान्ययोरपी'ति न्याये मानाभावात्, तत्तत्पृथिवीसमवेतातिरिक्तस्य गन्धादेरलीकत्वात्। अतो नान्धकारस्य नीलरूपवत्त्वे गन्धवत्त्वप्रसङ्ग इति दिक्।

यच्च आलोकस्येवाञ्जनादेरपि स्वाव्यवहितोत्तरचाक्षुषं प्रति हेतुत्वे व्यभिचारप्रचारादिति [दृश्यतां १४७ तमे पृष्ठे] गदितं, तन्न, एवं सति तमसोऽप्यालोकनिरपेक्षचक्षुर्ग्राह्यत्वापातेन लाभमिच्छतो मूलतो हानिप्रसङ्गात्।

यत्तु किरणावलीरहस्ये मथुरानाथेन तादृशाञ्जने मानाभावादिति [कि र पृ ६१] कथितं तदसङ्गतम्, साम्प्रतमपि हिमालयार्बुदाचलादावञ्जनसंस्कृतचक्षुषा निशायां स्वैरतया विचरतां पर्वत-पङ्क-प्रस्तर-पङ्कज-पक्षि-पशु-पथःप्रभृतिकं पश्यतां योगिप्रभृतीनामुपलम्भेः।

तमो द्रव्यं घनतरनिकरलहरीप्रभृतिशब्दैः व्यपदिश्यमानत्वात् किरणादिवदिति रत्नाकरावतारिकादौ व्यक्तम्।

उच्छृङ्खलशेषानन्त-प्रगल्भ-कुमारिलभट्ट-श्रीधरप्रभृतिमतनिराकरणादिकं बुभुत्सुभिः स्याद्वादरहस्य-कल्पलतादिकमभ्यसनीयमित्यलं पल्लवितेन।

नैयायिक! समुत्तिष्ठ तमोऽभावभ्रमं वम ।
तर्कागमादितः सिद्धं द्रव्यत्वं तमसो हि मत् ॥१॥

इति मुनियशोविजयविरचितायां हेमलताभिधानायां वादमालाटीकायां पञ्चमो वादः ॥

► वल्लभा ◄

ही है - यह फलित होता है। जैसे 'नील नभ' यह प्रत्यक्ष भ्रम है वैसे ही 'नील तम' यह साक्षात्कार भी भ्रम ही है। 'नील तम' इस भ्रमात्मक प्रत्यक्ष में दोष अन्धकारस्वरूप ही है। अन्धेरा भ्रम का निमित्त है। अन्यगत नीलरूप का अन्धकार में आरोप होता है उसका कारण अन्धकारस्वरूप दोष है। फिर भी पीत आदि रूप के अध्यारोप की समस्या को अवकाश नहीं है, क्योंकि आरोप होने पर निमित्त का अनुसरण होता है। निमित्त की उपस्थिति मात्र से कहीं आरोप नहीं किया जा सकता। नील रूप का अन्धकार में आरोप प्रसिद्ध है। अतः तदर्थ दोषात्मक निमित्त की कल्पना की जाती है। मगर तादृश दोष से पीत, श्वेत आदि रूप का आरोप अन्धकार में हो सकता नहीं है। इस तरह अन्धकार महदुद्भूतानभिभूतरूपवाले आलोक के अभावात्मक है - यह नैयायिकमतानुसार सिद्ध होता है। इस तरह अन्धकार पदार्थ का विवेचन समाप्त हुआ। साथ ही पाँचवा वाद भी पूर्ण हुआ। अन्धकारविषयक जैनदर्शन का क्या मन्तव्य है ? इस विषय में अधिक जिज्ञासु हेमलता टीका पर अपनी निगाह डाल सकते है।

★ ● ☆ ○ ★ ● ☆ ○

## ★ षष्ठो वायुस्पार्शनवादः ★

'वायुः स्पार्शन' इति मीमासकाः तेषामयमाशयः 'शीतो वायुर्वाती'ति वायुमुख्यविशेष्यकस्पार्शनप्रतीतेस्तस्य स्पार्शनत्व निराबाधम्। न चासौ न स्पार्शनी अपि तु मानसीति वाच्यम् 'वात स्पृशामी'त्याद्यनुव्यवसायानुपपत्तेः। न चासौ भ्रमः बाधकाभावात्। न च द्रव्यचाक्षुषवद्द्रव्यस्पार्शनेऽप्युद्भूतरूपस्य हेतुत्वात्, कारणाभाव एव बाधक इति वाच्यम् 'प्रभा हि



### ◆ हेमलता ◆

सहस्रफणिपार्श्व नत्वा सुरतविभूषणम् ।
स्पृश्यते खलु वायुर्न वेति मीमास्यतेऽधुना ॥१॥

वायुःस्पार्शनो न वा? इति विप्रतिपत्तिः। विधिकोटिः उद्देश्यतावच्छेदकसामानधिकरण्येन, निषेधकोटिश्चोद्देश्यतावच्छेदकावच्छेदेन, तेन न बाधसिद्धसाधने। वायुर्न स्पार्शन इति निषेधकोटिवादिनो नैयायिकाः वायु स्पार्शन इति च विधिकोटिवादिनः मीमासका वदन्ति। तेषा = मीमासकाना अयमाशयः शरीरवायुसयोगानन्तर 'शीतो वायुर्वाती'ति वायुमुख्यविशेष्यकस्पार्शनप्रतीते = निरुक्तवायुवृत्तिप्रधानविशेष्यतानिरूपकलौकिकस्पार्शनप्रत्यक्षानुपपत्तेः तस्य = वायोः स्पार्शनत्व निराबाधम्। तस्या लैङ्गिकत्वे 'शीतःस्पर्शो वायुवृत्तिरि'तिप्रतीतिः स्यात् न तु 'शीतो वायुर्वाती'तिप्रतीतिः। न च असौ = 'शीतो वायुर्वाती'तिव्यवसायात्मिका धीः न स्पार्शनी अपि मानसी इति न तदनुरोधेन वायोः स्पार्शनत्वमिति वाच्यम् 'वात स्पृशामी'त्याद्यनुव्यवसायानुपपत्ते अनुव्यवसायस्य व्यवसायविषयकत्वेन व्यवसायस्वरूपनिर्णायकत्वात्। न च असौ = 'वात स्पृशामी'त्याद्यनुव्यवसायो भ्रम इति वाच्यम् बाधकाभावात् = 'वात न स्पृशामी'त्याद्याकारकस्य बाधकस्य विरहात्। न हि बाधकविरहे प्रतीतेर्भ्रमत्वकल्पना युक्ता, अतिप्रसङ्गात्,। न च वायुना विषयविधया तत्तद्व्यक्तित्वेन स्वविषयकलौकिकप्रत्यक्ष प्रति कारणत्वकल्पनागौरवमेव बाधकमिति वाच्यम् विषयस्य तत्तद्व्यक्तित्वेन कारणताया मानाभावात्, विषयस्य तत्तद्व्यक्तित्वेन कारणतावृद्धिभियाऽतीन्द्रियत्वाभ्युपगमे घटादेरपि तथात्वापत्तेः। न च द्रव्यचाक्षुषवद् = द्रव्यगोचरलौकिकचाक्षुषवद् द्रव्यस्पार्शने = लौकिकविषयतासम्बन्धेन द्रव्यगोचरस्पार्शनत्वाच्छिन्न प्रति अपि समवायसम्बन्धेन उद्भूतरूपस्य हेतुत्वात् वायावुत्कटरूपविरहेण कारणाभाव = द्रव्यलौकिकस्पार्शनजनकविरह एव वायोः स्पार्शनत्वे बाधक',कार्यस्य कारणविरहेऽयोगादिति वाच्यम् एव प्रभाया अपि स्पार्शनापत्तेः तत्रोद्भूतरूपस्य सत्त्वात्।

यदि लौकिकविषयतासम्बन्धेन द्रव्यस्पार्शन प्रति समवायेनोद्भूतरूपस्य कारणत्व स्यात् प्रभाया अपि स्पार्शन स्यादेव। न च प्रभायाः भवति। अतो नोत्कटरूपस्य द्रव्यस्पार्शन प्रति कारणत्व सम्भवति। न च प्रभा हि न तेजोद्रव्य किन्तु तेजसो रूपमिति तत्स्पार्शनस्योत्कटरूपकार्यतावच्छेदकानाक्रान्तत्वेन न तत्त्वाच्प्रसङ्ग इति वाच्यम् प्रभा हि तेजसो रूपमिति नयेऽपि उत्कटरूपस्य द्रव्यस्पार्शनहेतुत्वे



### ▶ वल्लभा ◀

वायु०। वायु प्रत्यक्षविषय हे या नही ? यह दार्शनिक जगत मे विवाद हे। नैयायिक विद्वानो की यह मान्यता है कि वायु का स्पार्शन प्रत्यक्ष होता नही हैं। जब कि मीमासक मनीषियो की यह राय हे कि वायु स्पार्शन = स्पार्शनप्रत्यक्षविषय हैं। इसके भीतर मीमासको का आशय यह है→शरीर और वायु का सयोग होने के पश्चात् 'शीतो वायु वाति' = 'शीतल पवन बहता ह' इत्याकारक स्पार्शन साक्षात्कार होता है, जिसमे वायु मुख्यविशेष्यविधया भासमान हे। प्रत्यक्ष मे जो मुख्य विशेष्य बनता हे वह अवश्य लौकिक प्रत्यक्ष का विषय होता है। अत वायु का स्पार्शन साक्षात्कार निराबाध हे। यहाँ इस शङ्का का कि → ''उपदर्शित 'शीतो वायु वाति' यह प्रतीति स्पार्शन प्रत्यक्षात्मक नही है किन्तु मानस साक्षात्कारस्वरूप हे। इसलिये उस प्रतीति के बल से वायु को त्वगिन्द्रियजन्यसाक्षात्कार का विषय नही माना जा सकता←समाधान यह है कि 'शीतो वायु वाति' इत्याकारक प्रतीति के अनन्तर 'वायु स्पृशामि' इत्याकारक अनुव्यवसाय होता हे, जो पूर्वोत्पन्नप्रतीतिविषयक होने से उसके स्वरूप का निर्णायक होता ह। 'वायु स्पृशामि' इत्याकारक अनुव्यवसाय का अर्थ यह है कि 'अह वायुविषयकस्पार्शनप्रत्यक्षवान्'। अत 'शीतो वायु वाति' यह प्रत्यक्ष मानस नही है अपितु त्वाच हे - यह फलित होता है। उपर्युक्त अनुव्यवसाय को भ्रमात्मक नही कहा जा सकता, क्योकि उसके प्रामाण्य का कोई बाधक नही है। बिना बाधक के उसे भ्रम कहने पर घटादिप्रतीति भी भ्रमात्मक सिद्ध हो जायेगी, जिसके फलस्वरूप शून्यवाद की आपत्ति आयेगी।

#### ●● उद्भूतरूप द्रव्यप्रत्यक्ष का अकारण - मीमासक ●●

न च द्र०। यदि नैयायिक की ओर से यह कहा जाय कि→'उद्भूतरूप जैसे द्रव्यविषयक चाक्षुष प्रत्यक्ष का कारण हे ठीक वेसे ही द्रव्यगोचर स्पार्शन साक्षात्कार का भी कारण होता हे। जिसका स्पार्शन प्रत्यक्ष होता हे उसमे उत्कट रूप अवश्य रहता है जेसे घटादि। उत्कट रूप से शून्य द्रव्य कभी भी त्वाचप्रत्यक्ष का विषय बनता नही हे जैसे आकाश, पिशाच आदि। इस तरह

२४

तेजसो रूपमि'ति नयेऽपि त्रसरेणुस्पार्शनवारणाय द्रव्यस्पार्शनं प्रत्युद्भूतस्पर्शस्य हेतुत्वावश्यकत्वे उद्भूतरूपस्य तत्राऽहेतुत्वात् । प्रकृष्टमहत्त्वस्य तद्धेतुत्वे तत्प्रकर्षस्य कार्यमात्रवृत्तिजातित्वेन तदवच्छिन्नं प्रति कारणताकल्पने गौरवात् त्रसरेणावनुद्भूतस्पर्शस्वीकारस्यै-वौचित्यात् ।

◆ हेमलता ◆

स्वीक्रियमाणे त्रुटिसाक्षात्कारप्रसङ्गस्य दुर्वारत्वात्, तत्रोद्भूतरूपस्य सत्त्वेऽपि लौकिकविषयतया द्रव्यस्पार्शनानुदयात् । न च त्रसरेणावुद्भूतरूपस्य सत्त्वेऽप्युत्कटस्पर्शविरहान्न तत्त्वाचप्रसङ्गः लौकिकविषयतया द्रव्यस्पार्शने उद्भूतरूपस्येवोद्भूतस्पर्शस्याऽपि समवायेन हेतुत्वादिति वाच्यम् त्रसरेणुस्पार्शनवा-रणाय लौकिकविषयतया द्रव्यस्पार्शनं प्रति समवायेन उद्भूतस्पर्शस्य हेतुत्वावश्यकत्वे उद्भूतरूपस्य तत्र = द्रव्यस्पार्शने अहेतुत्वात् = कारणतानावश्यकत्वात् । द्रव्यस्पार्शनं प्रति उद्भूतस्पर्शस्य हेतुत्वेनैव पिशाचादेर्गगनादेश्चास्पार्शनत्वोपपत्तेः द्रव्यस्पार्शनं प्रति उद्भूतरूपकारणत्वकल्पनया मृतम् । न च लौकिकविषयतया द्रव्यस्पार्शनं प्रति समवायेनोद्भूतरूपस्येव प्रकृष्टमहत्त्वस्याऽपि पृथक्कारणत्वान्न त्रुटिस्पार्शनप्रसङ्गः तत्रोद्भूतरूपस्य सत्त्वेऽपि प्रकृष्टमहत्त्वस्य विरहात्, त्रुटिमहत्त्वस्याप्रकृष्टत्वादिति वक्तव्यम् प्रकृष्टमहत्त्वस्य तद्धेतुत्वे = लौकिकविषयतया द्रव्यस्पार्शनं प्रति कारणत्वाभ्युपगमे, तत्प्रकर्षस्य = महत्त्ववृत्तिप्रकृष्टत्वस्य कार्यमात्रवृत्तिजातित्वेन कार्यतावच्छेदकत्वापातात्, तदवच्छिन्नं = प्रकृष्टत्वजात्यवच्छिन्नं प्रति कारणताकल्पने गौरवात् त्रसरेणौ अनुद्भूतस्पर्शस्वीकारस्यैव औचित्यात् न तु द्रव्यस्पार्शनं प्रति प्रकृष्टमहत्त्वोद्भूतरूपयोः कारणत्वकल्पनमुचितमित्येवकारार्थः । न चरमुष्मणो भर्जनकपालस्थानलादेश्च स्पार्शनापत्तिः, द्रव्यस्पार्शनं प्रति रूपस्याऽहेतुत्वादिति वाच्यम् इष्टत्वात् । अतो नोद्भूतरूपवत्त्वं द्रव्यस्पार्शने कारणम्, वायोः प्रत्यक्षत्वात् । प्रयोगस्त्वेवं वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात्, महत्त्वे सत्युद्भूतस्पर्शवत्त्वाद्वा घटवत् । न चाऽप्रयोजकः, स्पार्शनप्रत्यक्षत्वे महत्त्वे सत्युद्भूतस्पर्शवत्त्वं प्रयोजकं नोद्भूतरूपवत्त्वमपि गौरवादित्युक्तत्वात् । न च पक्षधर्मावच्छिन्नसाध्यव्यापकः साधनावच्छिन्नसाध्यव्यापकश्चोद्भूतरूपवत्त्वमुपाधिः स्पार्शनप्रत्यक्षत्वे तस्याऽप्रयोजकत्वात्, त्वगिन्द्रियव्यापारानन्तरं 'वायुर्वाती'तिप्रतीतेश्च । न च स्पर्शलिङ्गग्रहे तदुपनयः घटेऽपि तथात्वापत्तेः, स्पर्शाग्रहेऽपि 'वायुर्वाति' 'शीतं वायुं स्पृशामी'तिप्रतीतेश्च । न च शीतद्रव्योपनायकत्वेनानुमिते वायौ तथा धीः, बाधकाभावात्, विशेषदर्शने सत्यारोपाऽभावाच्च । न च स्पार्शनत्वेऽचाक्षुषत्वं बाधकं चक्षुषानुपलभ्यमानस्य त्वचानुपलम्भादिति वक्तव्यम् तर्हि चक्षुरेव द्रव्यग्राहकं त्वचा स्पर्शमात्रं प्रतीयत इति वायाविव प्रत्यभिज्ञाऽपि तद्वदेव । न चानुभवस्य दुरपह्नवत्वात् त्वचाऽऽश्रयसहित एव स्पर्श उपलभ्यत इति वाच्यम् । वायावपि समसमाधानत्वात् । न

► वल्लभा ◄

अन्वय-व्यतिरेक से उद्भूतरूप में द्रव्यस्पार्शन प्रत्यक्ष की हेतुता सिद्ध होती है । वायु में रूप नहीं है, उद्भूत रूप की तो बात ही क्या ? द्रव्यस्पार्शन का कारणाभाव ही वायु के स्पार्शन प्रत्यक्ष में एवं 'वातं स्पृशामि'इत्याकारक अनुव्यवसाय के प्रामाण्य में बाधक है । प्रभा में उपर्युक्त कार्यकारणभाव बाधित नहीं है, क्योंकि प्रभा स्वयं तेजोद्रव्य नहीं है किन्तु तेजोद्रव्य का रूप है । अत एव उसका स्पार्शन न हो तो भी कोई हानि नहीं है । स्वकार्यतावच्छेदकधर्मानाक्रान्त की उत्पत्ति अपने से कैसे हो सकती ? इसलिये वायु का स्पार्शन हो नहीं सकता - यह फलित होता है' ← तो यह असंगत है, क्योंकि प्रभा को तेजोद्रव्य का रूप मानने पर भी द्रव्यस्पार्शन के प्रति उद्भूतरूप को कारण मानने की वजह त्रसरेणु के स्पार्शन प्रत्यक्ष की आपत्ति दुर्वार होगी, क्योंकि त्रसरेणु में उद्भूत रूप रहता है।

यदि त्रसरेणु के स्पार्शन प्रत्यक्ष के निवारणार्थ नैयायिक की ओर से यह कहा जाय कि→द्रव्यविषयक स्पार्शन प्रत्यक्ष के प्रति उद्भूतरूप की भाँति उद्भूतस्पर्श भी कारण होता है । त्रसरेणु में उद्भूत रूप होने पर भी उत्कटस्पर्श नहीं होने की वजह उसके स्पार्शन प्रत्यक्ष की आपत्ति को अवकाश रहता नहीं है'←तो यह भी असङ्गत है, क्योंकि त्रसरेणुस्पार्शन के परिहारार्थ द्रव्यस्पार्शन के प्रति उद्भूत स्पर्श में हेतुता आवश्यक = प्रमाणसिद्ध ही है तब उसीसे त्रसरेणु के स्पार्शन प्रत्यक्ष का परिहार हो जाने से द्रव्यविषयक स्पार्शन प्रत्यक्ष के प्रति उद्भूत रूप को कारण कहा जा नहीं सकता । अनावश्यक कारणता के स्वीकार में गौरव है ।

## ▲▲ प्रकृष्ट महत्त्व द्रव्यस्पार्शन का अजनक - मीमांसक ▲▲

प्रकृ० । बचाव के लिये यहाँ नैयायिक का यह वक्तव्य कि→'द्रव्यस्पार्शन के प्रति जैसे उत्कट रूप कारण होता है ठीक वैसे ही प्रकृष्ट महत्त्व = महत्परिमाण भी कारण होता है । घटादि के स्पार्शन के अनुरोध से प्रकृष्ट महत्परिमाण में द्रव्यस्पार्शन की हेतुता सिद्ध है । त्रसरेणु में उद्भूतरूप होने पर भी उसके स्पार्शन का आपादन नहीं किया जा सकता, क्योंकि उसका महत्परिमाण अपकृष्ट है । प्रकृष्टमहत्त्व के विरह से त्रुटिस्पार्शन परिहृत हो जाता है'←भी निराधार है, क्योंकि त्रसरेणु से इतर चतुरणुक आदि में रहनेवाले प्रकृष्टमहत्त्व जन्य होने की वजह महत्परिमाणगत प्रकर्ष = प्रकृष्टत्वजाति कार्यमात्रवृत्ति है । जो जाति कार्यमात्रवृत्ति होती है वह किसीकी कार्यतावच्छेदक बनती है । अर्थात् महत्परिमाणवृत्तिप्रकृष्टत्वावच्छिन्न के प्रति अन्य कारणता की कल्पना करनी होगी, अन्यथा वह परिमाण आकस्मिक बन जायेगा । मगर इस तरह प्रकृष्टत्वावच्छिन्न के प्रति कारणतान्तर की कल्पना करने पर गौरव

अथ मानसेतरद्रव्यलौकिकप्रत्यक्षत्वावच्छेदेनैवोद्भूतरूपस्य द्रव्य लौकिक चाक्षुष प्रति हेतुत्वान्न वायोः स्पार्शनमिति चेत् ? न, आत्मेतरद्रव्यप्रत्यक्षत्वादिकमादाय विनिगमनाविरहात्, द्रव्यचाक्षुषत्वापेक्षया गौरवाच्च तदवच्छिन्न प्रत्युद्भूतरूपस्याऽहेतुत्वात् ।

◆ हेमलता ◆

च दोषाभावे सति द्रव्यग्रहे तद्गतसङ्ख्यापरिमाणादिग्रहनियमात् वायौ सर्वथा तदग्रहान्न स प्रत्यक्ष इति वक्तव्यम् यतः न तावदय व्यक्तो नियमः पृष्ठलग्नवस्त्रादेः सङ्ख्यापरिमाणाऽग्रहेऽपि त्वचा ग्रहणात् तज्जातीये तु फूत्कारादौ सङ्ख्यापरिमाणादीना वाय्वभिघातस्य च शरीरे प्रत्यक्षत्वात् । न च बहिरिन्द्रियजन्यसाक्षात्कारे महत्त्वे सत्युद्भूतरूपवत्त्व प्रयोजक सति सम्भवे त्यागाऽयोगात्, न तु जन्येन्द्रियग्राह्यविशेषगुणवत्त्व कार्यमहत्त्वसमानाधिकरणविशेषगुणवत्त्व वा, रसनागतपित्तद्रव्यस्योद्भूततिक्तस्य वायूपनीतसुरभिद्रव्यस्य च प्रत्यक्षतापत्तेरिति वाच्यम् यतो नोद्भूतरूपवत्त्व तथा नयनगतपित्तद्रव्यस्य च प्रत्यक्षतापत्तेः । अस्तु वोद्भूतस्पर्शवत्त्व तत्र तन्त्रम् । न चैव प्रभायामप्रत्यक्षत्व, यतः प्रभा हि न द्रव्य किन्तु तेजसो रूप, तदाश्रयतेजःप्रतीतिः प्रत्यक्षरूपलिङ्गाधीनैव यथा तत्रोष्मादिप्रतीतिः । तत्र सयोग-कर्मादिक कथ प्रत्यक्षमिति चेत् ? चान्द्रसौरदीपप्रभादौ तु न कथञ्चित् इन्द्रनीलप्रभाया रूपस्य पूर्वदेशानुपलम्भेनोत्तरदेशोपलम्भेन लिङ्गेन तदाश्रयतेज'सयोगविभागाद्यनुमानमिति नैयायिकनये यथा त्वचा स्पर्शमात्रग्रहानन्तर फूत्कारे सयोगादीनाम् । एतेन धूमबाष्पयोरस्पार्शनत्वेनोद्भू- तस्पर्शशून्यत्वेऽपि चाक्षुषत्व अन्यथा तद्गतसयोगविभागकर्मणा प्रत्यक्षता न स्यात् लिङ्गाभावादिति निरस्तम् ।

नन्वेव विनिगमकविरहादुभयोरपि तथात्वमस्तु, तथापि वायुरप्रत्यक्ष इति चेत् ? न, एव सति बहिरिन्द्रियजन्यसाक्षात्कारे चाक्षुषत्वे स्पार्शनप्रत्यक्षत्वे च प्रत्येकमुद्भूतरूपवत्त्वे सत्युद्भूतस्पर्शवत्त्व प्रयोजक पर्यवस्यतीति गौरवम् । मम तु चाक्षुषत्वे उद्भूतरूपवत्त्व स्पार्शनत्वे चोद्भूतस्पर्शवत्त्व तथा, यस्य विशेषे प्रयोजकत्व तस्यानुगतेन रूपेण सामान्यप्रयोजकत्वमिति द्रव्यग्राहकबहिरिन्द्रियव्यवस्थापकोद्भूतविशेषगुणवत्त्व सामान्यप्रयोजकमिति लाघवम् । विशेषस्य सामान्यस्य च भिन्नप्रयोज्यत्वनियमान्नैक प्रयोजकम् ।

ननु वायुर्यदि बहिरिन्द्रियजन्यसाक्षात्कारविषयद्रव्य स्पार्शनसाक्षात्कारविषयद्रव्य वा स्यात् उद्भूतरूपः स्यात् । न चैव तस्मात् तथा तादृशसाक्षात्कारविषयद्रव्यस्य रूपजनकत्वनियमादिति चेत् ? न, रूपवत्समवेतत्वेन हि द्रव्यस्य रूपजनकत्व न तु तादृशसाक्षात्कारविषयद्रव्यत्वेन, तस्य रूपजननोत्तरकालीनत्वात् । घटो यदि चक्षुरितरेन्द्रियग्राह्यद्रव्य स्यात् अरूपमस्पर्शमचाक्षुषादि स्यात्। त्वगिन्द्रिय यदि द्रव्यग्राहकबहिरिन्द्रिय स्यात् रूपवत् स्यात् स्पर्शग्राहक वा न स्यात् रूपग्राहि वा स्यात् चक्षुर्वत् । न चैव तस्मान्न तथेति घटोऽपि न त्वगिन्द्रियग्राह्य' स्यात् तद्गतसङ्ख्यादिज्ञान फूत्कारादाविवेति स्यात् स्पृशामीत्यनुव्यवसायश्च घटवद् वायावपि तुल्यः ।

प्राचीननैयायिकः पुनरपि कारणाभावमाशङ्कते अथेति । मानसेतरद्रव्यलौकिकप्रत्यक्षत्वावच्छेदेनैव = बहिरिन्द्रियजन्यद्रव्यलौकिकसाक्षात्कारत्वाव-च्छेदेनैव, उद्भूतरूपस्य द्रव्यलौकिकचाक्षुष प्रति हेतुत्वात् न वायो स्पार्शन तत्रोत्कटरूपस्य विरहात् । अत' कारणाभाव एव वायो' स्पार्शनत्वे बाधकः । न च तादृशकार्यकारणभावे मानाभाव इति वाच्यम् वायु- पिशाचादेरात्मनश्च लौकिकचाक्षुषवारणाय द्रव्यलौकिकचाक्षुष प्रति उद्भूतरूपस्य हेतुतावश्यकतया तस्येव सामान्यतो मानसेतरद्रव्यलौकिकप्रत्यक्षत्वस्य कार्यतावच्छेदकत्वात्, असति बाधके सामान्यधर्मावच्छेदेनेव कार्यतादिग्राहकप्रमाणप्र-वृत्तेरिति चेत् ?

मीमासकः प्रत्युत्तरयति - नेति । आत्मेतरद्रव्यप्रत्यक्षत्वादिक आदिपदेन मूर्तद्रव्यलौकिकप्रत्यक्षत्व -स्पर्शवद्द्रव्यलौकिकप्रत्यक्षत्वादेर्ग्रहण, आदाय, कार्यतावच्छेदकधर्मे विनिगमनाविरहात् सर्वेषामङ्गीकारेऽनेककार्यकारणभावप्रसङ्गः । द्रव्यचाक्षुषत्वापेक्षया कार्यतावच्छेदकशरीरे गौरवाच्च तदवच्छिन्न = मानसेतरद्रव्यलौकिकप्रत्यक्षत्वावच्छिन्न प्रति समवायेन उद्भूतरूपस्य अहेतुत्वात् । अतो न वायोरुद्भूतरूपशून्यता प्रत्यक्षे बाधिका । अतो वायुः प्रत्यक्ष एवेति । द्रव्य चाक्षुषत्वस्यैवोत्कटरूपकार्यतावच्छेदकत्वौचित्यम्, बाधकसत्त्वे सामान्यस्याऽकिञ्चित्करत्वादिति मीमासकाशय' ।

► वल्लभा ◄

होगा । इसकी अपेक्षा लाघव से त्रसरेणु के स्पर्श को अनुद्भूत मानना ही मुनासिब है । द्रव्यस्पार्शन के प्रति उद्भूत स्पर्श कारण होने से उद्भूतस्पर्शशून्य त्रसरेणु के स्पार्शन प्रत्यक्ष की आपत्ति को अवकाश नहीं रहेगा । मगर इस परिस्थिति मे वायु का त्वाच साक्षात्कार निराबाध हो जायेगा, क्योकि वायु मे उद्भूत स्पर्श रहता है - जो अनुभवसिद्ध भी है । यह मीमासको का तात्पर्य है ।

◆◆ नैयायिकमत मे विनिगमनाविरह ◆◆

अथ मा० । यहाँ नैयायिक का यह कथन है कि→उद्भूतरूप द्रव्यलौकिकचाक्षुष का कारण है ही मगर कार्यतावच्छेदक धर्म मानसेतरद्रव्यलौकिकप्रत्यक्षत्व ही है । वायु का यदि स्पार्शन प्रत्यक्ष माना जाय तब वह मानसेतर द्रव्यविषयक लौकिक साक्षात्कार होने

अथ मूर्तलौकिकप्रत्यक्षत्व-द्रव्यलौकिकचाक्षुषत्वयोः समशरीरतया विनिगमकाभावादुभयमेवोद्भूतरूपकार्यतावच्छेदकमिति चेत् ? न, उक्तानुव्यवसायानुपपत्त्या मूर्तलौकिकप्रत्यक्षत्वस्य प्रकृष्टमहत्त्वस्येवोद्भूतरूपस्यापि कार्यतानवच्छेदकत्वात् ।

◆ हेमलता ◆

नैयायिकः शङ्कते अथेति । चेदित्यनेनास्यान्वयः । मूर्तलौकिकप्रत्यक्षत्व-द्रव्यलौकिकचाक्षुषत्वयोः समशरीरतया एकतरस्य गुरुशरीरत्वविरहात् ।

विनिगमकाभावात् = अन्यतरपक्षपातियुक्तिविरहात् उभयमेव मूर्तलौकिकप्रत्यक्षत्व-द्रव्यलौकिकचाक्षुषत्वोभयमेव उद्भूतरूपकार्यतावच्छेदकं न तु केवलं द्रव्यलौकिकचाक्षुषत्वमेव । उद्भूतरूपशून्यत्वान्न वाय्वादेः स्पार्शनसाक्षात्कारसम्भवः तस्योद्भूतरूपनिष्ठकारणतानिरूपितकार्यताया अवच्छेदकीभूतेन मूर्तलौकिकप्रत्यक्षत्वेनाक्रान्तत्वादिति ।

न च मूर्तलौकिकप्रत्यक्षत्वस्य कार्यतावच्छेदकत्वेऽपि द्रव्यलौकिकचाक्षुषत्वस्य कार्यतावच्छेदकत्वमावश्यकम्, अन्यथा आत्मन्युद्भूतरूपाभावान्मूर्तद्रव्य-क्षेत्रादावसम्भवेऽपि चक्षुःसंयोगलक्षणसन्निकर्षसत्त्वेन द्रव्यलौकिकचाक्षुषोदयप्रसङ्गस्य दुर्वारत्वात्, तथा चैवमेव विनिगमकमिति वाच्यम् मूर्तलौकिकप्रत्यक्षत्व-मात्रस्य कार्यतावच्छेदकत्वेऽपि मूर्तलौकिकप्रत्यक्षानतिरिक्तस्य द्रव्यलौकिकचाक्षुषस्यालीकतया सामान्यसामग्रीविरहादेवात्मनि द्रव्यलौकिकचाक्षुषोत्पत्तेरस-म्भवादिति चेत् ?

मीमांसकः प्रत्युत्तरयति - नेति । 'वायुं स्पृशामी'ति उक्तानुव्यवसायानुपपत्त्या प्रकृष्टमहत्त्वस्य इव उद्भूतरूपस्यापि कार्यतानवच्छेदकत्वादिति । यथा 'त्रसरेणुं पश्यामी'त्यनुव्यवसायानुपपत्त्या मूर्तलौकिकप्रत्यक्षत्वं न प्रकृष्टमहत्त्वस्य कार्यतावच्छेदकं तथा 'वायुं स्पृशामी'त्यनुव्यवसायानुपपत्त्या न तत् उद्भूतरूपस्याऽपि जन्यतावच्छेदकं व्यतिरेकव्यभिचारग्रस्तत्वात्तादृशकारणतायाः । अस्त्येव विनिगमकत्वात् द्रव्यलौकिकचाक्षुषत्वस्यैवोद्भूतरूपकार्यता-वच्छेदकत्वमिति ।

अथ मीमांसकाभिप्रायः यथा त्रसरेण्वायवृत्तिविजातीयमहत्त्वस्य सामान्यतो द्रव्यलौकिकप्रत्यक्षत्वेनैव कार्यतावच्छेदकं लाघवात्, द्रव्यस्पार्शनस्य तु कार्यतावच्छेदकत्वे द्रव्यचाक्षुषं प्रति पृथग्महत्त्वसामान्यस्य कारणत्वकल्पनापत्तेः । अतः त्रसरेणुर्न चाक्षुषः किन्तु तद्गतरूपादिकमेव चाक्षुषमित्यस्य सुवचत्वेऽपि 'त्रसरेणुश्चलती'ति प्रत्यक्षानन्तरं 'त्रसरेणुं पश्यामी'त्याकारकानुव्यवसायबलात् द्रव्यस्पार्शनस्यैव विजातीयमहत्त्वकार्यतावच्छेदकत्वस्वीकारस्तथा 'शीतो वायुर्वाती'त्यादिप्रत्यक्षानन्तरं 'वायुं स्पृशामी'त्याकारकानुव्यवसायानुपपत्तिरेव मूर्तलौकिकप्रत्यक्षत्वस्योद्भूतरूपकार्यतावच्छेदकत्वाभावे विनि-गमिकेति ।

▶ वल्लभा ◀

की वजह उद्भूतरूप के कार्यतावच्छेदक धर्म से आक्रान्त होगा । अतएव उसकी उत्पत्ति उद्भूतरूप के बिना कैसे हो सकेगी ? अतः वायु का स्पार्शन प्रत्यक्ष होता नहीं है - यह फलित होता है'⟵मगर यह विचारसंगत नहीं है, क्योंकि उद्भूतरूप का कार्यतावच्छेदक मानसेतरद्रव्यलौकिकप्रत्यक्षत्व है या आत्मेतरद्रव्यप्रत्यक्षत्वादि है ? इस विषय में कोई अन्यतरनिर्णायक तर्क नहीं है । एवं मानसेतरद्रव्यलौकिकप्रत्यक्षत्व धर्म द्रव्यचाक्षुषत्व की अपेक्षा गुरुतरशरीरवाला भी है । इसलिये मानसेतरद्रव्यलौकिकप्रत्यक्षत्व उद्भूतरूप का कार्यतावच्छेदक बन नहीं सकता । इसलिये मानसेतर द्रव्यलौकिकप्रत्यक्षत्वावच्छिन्न के प्रति उद्भूतरूप को कारण नहीं माना जा सकता ।

◆◆ मूर्तलौकिकप्रत्यक्षत्व कार्यतावच्छेदक - मीमांसक ◆◆

अथ मू० । यहाँ यह आक्षेप कि ⟶'मूर्तलौकिकप्रत्यक्षत्व और द्रव्यलौकिकचाक्षुषत्व तुल्यशरीरवाले हैं । दोनों धर्म समनियत है और अगुरु है । इसलिये उद्भूतरूप के कार्यतावच्छेदक मूर्तलौकिकप्रत्यक्षत्व और द्रव्यलौकिकचाक्षुषत्व उभय बनेंगे । क्योंकि किसी एक को जन्यतावच्छेदक मानने में कोई अन्यतरनिर्णायक युक्ति नहीं है । इस परिस्थिति में वायु का स्पार्शन प्रत्यक्ष हो नहीं सकेगा, क्योंकि वह उद्भूत रूप के कार्यतावच्छेदकीभूत मूर्तलौकिकप्रत्यक्षत्व धर्म से आक्रान्त है । वायु रूपशून्य होने से उसका लौकिकसाक्षात्कार नहीं हो सकता । बिना कारण के कार्य की उत्पत्ति नामुमकिन है'⟵भी निराधार है, क्योंकि वायु का स्पार्शन साक्षात्कार मान्य न करने पर 'शीतो वायुर्वाति' इत्यादि प्रत्यक्ष के अनन्तर होनेवाला 'वायुं स्पृशामि' इत्याकारक अनुव्यवसाय की अनुपपत्ति हो जायेगी । यह अनुव्यवसाय तो स्वाऽव्यवहितपूर्वोत्पन्न उपर्युक्त व्यवसायात्मक प्रतीति को वायुस्पार्शनात्मक सिद्ध करता है । इसलिये जैसे मूर्तलौकिकप्रत्यक्षत्व प्रकृष्टमहत्त्व का कार्यतावच्छेदक नहीं है ठीक वैसे ही उद्भूतरूप का भी कार्यतावच्छेदक होता नहीं है । प्रकृष्ट महत्त्व को मूर्तलौकिकप्रत्यक्षत्वावच्छिन्न का कारण मानने पर जैसे 'त्रसरेणु चलति' इस प्रतीति के अनन्तर होनेवाली 'त्रसरेणुं स्पृशामि' यह प्रतीति अनुपपन्न बनने की वजह मूर्तलौकिकप्रत्यक्षत्व प्रकृष्ट महत्त्व का कार्यतावच्छेदक नहीं है ठीक वैसे 'शीतो वायुर्वाति' इस प्रतीति के अनन्तर होनेवाली 'वायुं स्पृशामि' यह प्रतीति अनुपपन्न बनने की वजह मूर्तलौकिकप्रत्यक्षत्व उद्भूतरूप का कार्यतावच्छेदक हो नहीं सकता । त्रसरेणु जैसे प्रकृष्टमहत्त्वशून्य है वैसे ही वायु उद्भूतरूपविहीन है । इसलिये वायु के स्पार्शन की सिद्धि प्रदर्शित अनुव्यवसाय के बल पर की जा सकती है - यह मीमांसकों का तात्पर्य है ।

यत्तु मूर्तलौकिकप्रत्यक्षत्वं भगवत्साक्षात्कारसाधारणं न कार्यतावच्छेदकमिति वाय्वादेः स्पार्शनं निराबाधमिति तन्न इन्द्रियादिजन्यतावच्छेदकत्वेन लौकिकत्वस्य जन्यप्रत्यक्षमात्रवृत्तित्वात् । 'पश्यत्यचक्षुरि'त्यादेः लौकिकचाक्षुषसमानाकारज्ञानपरत्वाच्चाक्षुषादेस्तत्राऽसम्भवादिति केचित् ।

यदि तु परमाणु-द्वित्वादिजनकतावच्छेदककोटिप्रविष्टा लौकिकी विषयता भगवज्ज्ञानसाधारणी तदाऽस्तु मूर्तनिष्ठलौकि-

## ◆ हेमलता ◆

वस्तुतस्तु द्रव्यान्यद्रव्यसमवेतस्पार्शनं प्रति त्वक्संयुक्तत्वाचवत्समवायत्वेन सन्निकर्षस्य कारणता, न तु त्वक्संयुक्तप्रकृष्टमहत्त्वोद्भूतस्पर्शवत्समवायत्वेन, महत्त्वोद्भूतस्पर्शयोरुभयोः प्रवेशे गौरवात् । त्वाचवत्त्वञ्चोपलक्षणं न तु विशेषणं तेन सर्वत्र पूर्वमाश्रयत्वाचविरहेऽपि न क्षतिः । तथा च वाय्वादेरस्पार्शनत्वे तद्वृत्तिस्पर्शस्पार्शनानुपपत्तिरेव मूर्तलौकिकप्रत्यक्षत्वस्योद्भूतरूपकार्यतावच्छेदकत्वाभावे विनिगमिकेति मीमांसकाशयः ।

यत्तु मूर्तलोकिकप्रत्यक्षत्वं = मूर्तमात्रगोचरलौकिकप्रत्यक्षत्वं भगवत्साक्षात्कारसाधारणं = नित्यप्रत्यक्षानुगतं कार्याऽकार्यवृत्तितया न उद्भूतरूपस्य कार्यतावच्छेदकम् नित्यव्यावृत्ते धर्मे कार्यतावच्छेदके सम्भवति असति लाघवे तत्साधारणधर्मेण कार्यत्वकल्पनानुदयात् । न ह्यतिप्रसक्ते धर्मे सम्भवति गत्यन्तरेऽवच्छेदकत्वकल्पना दृष्टा श्रुता वा । इति हेतोः उद्भूतरूपस्य मूर्तलौकिकप्रत्यक्षत्वावच्छिन्नं प्रति हेतुत्वविरहेण नीरूपस्याऽपि वाय्वादेः = वायूष्मादेः स्पार्शनं प्रत्यक्षं निराबाधमिति, तन्न चारु, इन्द्रियादिजन्यतावच्छेदकत्वेन हेतुना लौकिकत्वस्य = लोकिकविषयताकत्वस्य जन्यप्रत्यक्षमात्रवृत्तित्वात् = सकलजन्यसाक्षात्कारवृत्तित्वे सत्यजन्यप्रत्यक्षाऽवृत्तित्वात् नातिप्रसक्तत्वं मूर्तलौकिकप्रत्यक्षत्वस्येति भवेदेव तदुद्भूतरूपकार्यतावच्छेदकम् । तथा च वायोः स्पार्शनानुपपत्तिः । न च भगवत्प्रत्यक्षस्य लौकिकविषयताशून्यत्वे 'पश्यत्यचक्षुः स शृणोत्यकर्णः' [ ] इत्यादिकं कथं सङ्गच्छेत ? पश्यतेः लौकिकचाक्षुषसाक्षात्कार एव रूढत्वादिति वाच्यम्, 'पश्यत्यचक्षुरि'त्यादेः 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः । स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तं [ना.परि. ९/१४] इति नारदपरिव्राजकोपनिषद्वचनस्य आदिपदेन 'पश्यन्वै तन्न पश्यति' [बृ.उप. ४/३/२३] इति बृहदारण्यकोपनिषद्वचनस्य च लौकिकचाक्षुषसमानाकारज्ञानपरत्वात् । अन्यथा 'अचक्षुर्विश्वतश्चक्षुरकर्णो विश्वतः कर्णः' [भ.जा.उप.२] इति भस्मजाबालोपनिषद्वचनस्य 'विश्वतश्चक्षुः' [बृ.महाना. उप. २/२] इति महानारायणोपनिषद्वचनस्य चानुपपत्तेः । चाक्षुषादेः = लौकिकविषयताशालिनः चक्षुरादिजन्यप्रतीतेः तत्र = ईश्वरे असम्भवात् । न च महेशे नित्यकृतिसत्त्वेऽपि दृष्टानुसारेण कृतिसमानाधिकरणं ज्ञानादिकं यथा कल्प्यते तथैव तत्र 'पश्यती'त्यनुरोधेन लौकिकचाक्षुषमप्यनुमीयते इति वाच्यम् एवं सति 'तच्चक्षुषाऽजिघृक्षत्' [ऐ. उप. १/३/५] इति ऐतरेयोपनिषद्वचनस्यानुपपत्तिप्रसङ्गात् । दृष्टानुसारेण कल्पनाऽपि तत्रात एव न कार्या । मूर्तलौकिकप्रत्यक्षत्वस्योद्भूतरूपजन्यतावच्छेदकत्वान्नीरूपस्य वायोः स्पार्शनासम्भव इति केचित् वदन्ति ।

यदि तु महेशसाक्षात्कारस्य लौकिकविषयताशून्यत्वे द्व्यणुकादिपरिमाणजनकं परमाणुद्वित्वादिकं नोत्पद्येत, द्वित्वादिकं प्रति लौकिकापेक्षाबुद्धेः कारणत्वात् अन्यथाऽस्मदादीनामपि परमाण्वाद्येकत्वाऽलौकिकप्रत्यक्षस्य सम्भवेन तदात्मकापेक्षाबुद्धितः परमाण्वादिद्वित्वाद्युत्पत्तिसम्भवेनेशकल्पनाया अप्यनवकाशात् । अत एव परमाणुद्वित्वादिजनकतावच्छेदककोटिप्रविष्टा लौकिकी विषयता भगवज्ज्ञानसाधारणी = महेश्वरसाक्षात्कारवृत्ति,

## ► वल्लभा ◄

### ◆◆ लौकिकता जन्यप्रत्यक्षमात्रवृत्ति ◆◆

यत्तु० । कुछ विद्वानों का यह मन्तव्य है कि → 'मूर्तलौकिकप्रत्यक्षत्व उद्भूतरूप का कार्यतावच्छेदक हो सकता नहीं है, क्योंकि भगवान् के साक्षात्कार में भी मूर्तगोचरलौकिकप्रत्यक्षत्व धर्म रहता है। भगवान का प्रत्यक्ष नित्य होने से कार्यताशून्य है। अकार्य में रहनेवाला धर्म कभी भी कार्यतावच्छेदक बन नहीं सकता। कार्याकार्यसाधारण मूर्तलौकिकप्रत्यक्षत्व उद्भूतरूप का कार्यतावच्छेदक नहीं होने की वजह रूपशून्य वायु का स्पार्शन होने में कोई बाधा नहीं है।

तन्न० । मगर यह बात सङ्गत नहीं है। इसका कारण यह है कि लौकिकत्व = लौकिकविषयता इन्द्रियजन्यतावच्छेदक है। अतएव वह कार्यमात्रवृत्ति है। जो प्रत्यक्ष कार्यात्मक है उसीमें लौकिक विषयता के रहने के सबब भगवान के प्रत्यक्ष में वह नहीं रहती है, क्योंकि वह नित्य है। इसलिये मूर्तलौकिकप्रत्यक्षत्व को उद्भूत रूप का कार्यतावच्छेदक कहना नैयायिक के लिये सुवच हो जायेगा। उपनिषद् आदि में 'स पश्यति अचक्षु स शृणोति अकर्ण' इत्यादि वचनोल्लेख उपलब्ध है, उसका तात्पर्य यही है कि ईश्वर का प्रत्यक्ष लौकिक चाक्षुष के समानाकारवाला होता है। मगर इसका मतलब यह नहीं है कि ईश्वर में चाक्षुष=चक्षुजन्य प्रत्यक्ष होता है। ईश्वरीयज्ञान नित्य होने से वह न तो चाक्षुष = चक्षुजन्य लौकिकप्रत्यक्षस्वरूप हो सकता है, न तो घ्राणजन्य या रसनादिजन्य हो सकता है - ऐसा भी कुछ विद्वानों का कथन है।

कविषयतासम्बन्धेन जन्यप्रत्यक्षत्वमेवोद्भूतरूपजन्यतावच्छेदकम्, समूहालम्बनगुणादिचाक्षुषे व्यभिचारवारणायोक्तसम्बन्धनिवेशस्यावश्यकत्वात्, जन्यप्रत्यक्षत्वञ्चेन्द्रियादिजन्यतावच्छेदकतया सिद्धा जातिरेवेति न गौरवम् ।

◆ हेमलता ◆

भगवत्साक्षात्कारसाधारणसाक्षात्कारत्वावच्छिन्नविषयताऽतिरिक्तलौकिकविषयताया मानाभावादिति लौकिकविषयताकत्वस्य नित्यसाधारणतया मूर्तलौकिकप्रत्यक्षत्वं नोद्भूतरूपकार्यतावच्छेदकं भवितुमर्हतीति विभाव्यते तदाऽस्तु मूर्तनिष्ठलौकिकविषयतासम्बन्धेन जन्यप्रत्यक्षत्वमेव उद्भूतरूपजन्यतावच्छेदकं = समवायसम्बन्धावच्छिन्नोद्भूतरूपत्वावच्छिन्नया कारणतया निरूपिताया कार्यताया अवच्छेदकं प्रत्यक्षत्वस्य नित्यसाधारणतया तन्मात्रस्य कार्यतावच्छेदकत्वाऽसम्भवात्, समूहालम्बनगुणादिचाक्षुषे = मूर्तवृत्तिगुणादिगोचरसमूहालम्बनचाक्षुषोदये व्यभिचारवारणाय = उद्भूतरूपस्य व्यतिरेकव्यभिचारनिवारणकृते उक्तसम्बन्धनिवेशस्य = कार्यतावच्छेदकसम्बन्धविधया मूर्तनिष्ठलौकिकविषयत्वसम्बन्धघटितत्वस्य आवश्यकत्वात् = प्रमाणसिद्धत्वात् । यदि लौकिकविषयतया जन्यप्रत्यक्षत्वावच्छिन्नं प्रति उद्भूतरूपस्य कारणत्वमङ्गीक्रियेत तदा 'इमे शुक्लशुक्लत्वे' इत्याकारकसमूहालम्बनगुणजातिचाक्षुषे व्यतिरेकव्यभिचारः स्यात्, गुणादौ गुणस्याऽसमवेतत्वात् । अतो मूर्तनिष्ठलौकिकविषयताया एवोद्भूतरूपनिरूपितकार्यतावच्छेदकविधया स्वीकार आवश्यकः । निरुक्तचाक्षुषस्य मूर्तनिष्ठलौकिकविषयतासम्बन्धेनानुत्पादात्तत्राऽपि उद्भूतरूपस्याऽकारणत्वात् व्यतिरेकव्यभिचारानवकाशः । न च जन्यप्रत्यक्षत्वस्य सामानाधिकरण्येन जन्यत्वविशिष्टप्रत्यक्षत्वरूपतया कार्यतावच्छेदकधर्मे गौरवं तथापि दुर्वारमिति वाच्यम् । यतः जन्यप्रत्यक्षत्वञ्च इन्द्रियादिजन्यतावच्छेदकतया सिद्धा जातिरेव इति हेतोः कार्यतावच्छेदकधर्मशरीरे न गौरवम् । जन्यप्रत्यक्षमात्रवृत्ति वैजात्यमेवोद्भूतरूपजन्यतावच्छेदकमिति 'न गौरवं कार्यतावच्छेदकधर्मशरीरे, प्रमाणान्तरसिद्धस्य वैजात्यस्यैव कार्यतावच्छेदकतया स्वीकारेऽतिरिक्तधर्मकल्पनागौरवमपीति भावः ।

▶ वल्लभा ◀

यदि० । यदि यहाँ ऐसा कहा जाय कि→'परमाणु आदि में द्वित्वादि संख्या की जनक तो लौकिक अपेक्षाबुद्धि ही होती है । यदि अलौकिक अपेक्षाबुद्धि को द्वित्वादिसंख्या की जनक मानी जाय तो हमारी अलौकिक अपेक्षाबुद्धि से भी परमाणु आदि में संख्या की उत्पत्ति होने लगेगी । मगर ऐसा होने पर ईश्वर का उच्छेद हो जायेगा, क्योंकि द्व्यणुक आदि के परिमाण के प्रति परमाणुआदि में रहने वाली द्वित्वादि संख्या कारण होती है और परमाणु आदि का लौकिक प्रत्यक्ष हमें नहीं होने की वजह 'अयमेकोऽयमेकः' इत्याकारक लौकिक अपेक्षाबुद्धि हमें नहीं हो सकेगी किन्तु परमाणुनिष्ठएकत्वविषयक अलौकिक अपेक्षाबुद्धि तो हमें हो सकती है । जिससे परमाणु में द्वित्व संख्या उत्पन्न होगी जो द्व्यणुकपरिमाण को उत्पन्न करेगी । द्व्यणुकपरिमाणजनक परमाणुगतद्वित्व की उत्पत्ति के लिये ईश्वरीय अपेक्षाबुद्धि अनावश्यक बनने से उसके आश्रयविधया ईश्वर की सिद्धि नहीं हो सकेगी । मगर यह तो ईश्वरवादी को अभिमत नहीं है । अतः परमाणुगत द्वित्वादि की जनक लौकिक अपेक्षाबुद्धि माननी आवश्यक है । परमाणुगत द्वित्वादि की जनकता के अवच्छेदक धर्म में लौकिक विषयता का प्रवेश आवश्यक होने पर भगवान के प्रत्यक्ष में भी लौकिक विषयता की सिद्धि हो जायेगी, क्योंकि 'अयमेकोऽयमेकः' इत्याकारक लौकिक अपेक्षाबुद्धि हमें हो नहीं सकती किन्तु ईश्वर को ही हो सकती है । इस तरह भगवान के प्रत्यक्ष में भी लौकिकविषयताकत्व सिद्ध होने की वजह मूर्तलौकिकप्रत्यक्षत्व उद्भूतरूप का कार्यतावच्छेदक बन नहीं सकता । कार्यताऽनतिरिक्तवृत्ति धर्म कार्यता का नियामक कैसे बन सकेगा ?←तो उद्भूतरूप के कार्यतावच्छेदकसम्बन्धविधया मूर्तनिष्ठलौकिकविषयतासम्बन्ध से जन्यप्रत्यक्षत्व ही स्वीकार्य होगा, क्योंकि वह नित्याऽनित्यसाधारण नहीं है । उद्भूतरूपकार्यता से अतिरिक्तवृत्ति नहीं होने की वजह जन्यप्रत्यक्षत्व उसका कार्यतावच्छेदक धर्म बन सकता है । यहाँ यह शङ्का कि→लौकिकविषयतासम्बन्ध से ही जन्यप्रत्यक्षत्व को उद्भूतरूप का कार्यतावच्छेदक न बना कर मूर्तनिष्ठ लौकिक विषयता संसर्ग से ही क्यों जन्यप्रत्यक्षत्व को उद्भूतरूप का कार्यतावच्छेदक बनाया गया ? ←इसलिये निराधार है कि लौकिकविषयतासम्बन्ध से जन्यप्रत्यक्षत्व को उद्भूत रूप का कार्यतावच्छेदक मानने पर 'रूपरूपत्वे' इत्याकारक गुण-जातिविषयक समूहालम्बन चाक्षुष में व्यभिचार होगा, क्योंकि लौकिक विषयता सम्बन्ध से वह समूहालम्बन चाक्षुष गुणादि में रहता है और गुणादि में गुण रहता नहीं है । उद्भूतरूपात्मक कारण के बिना ही गुणादि में उपर्युक्त समूहालम्बन चाक्षुषात्मक कार्य की उत्पत्ति होने से व्यतिरेक व्यभिचार स्पष्ट ही है । इसके परिहारार्थ मूर्तनिष्ठ लौकिक विषयता सम्बन्ध को उद्भूतरूप कार्यतावच्छेदकसम्बन्ध मानना आवश्यक है । इस स्थिति में व्यतिरेकव्यभिचार को अवकाश नहीं होगा, क्योंकि गुणादिविषयक समूहालम्बन चाक्षुष मूर्तनिष्ठ लौकिक विषयता सम्बन्ध से गुणादि में उत्पन्न ही होता नहीं है । कार्यतावच्छेदकविधया अभिमत सम्बन्ध से कार्य के अधिकरण में कार्याऽव्यवहितपूर्वक्षणावच्छेदेन कारणतावच्छेदकसम्बन्ध से कारण न रहता हो तभी व्यतिरेक व्यभिचार दोष प्रसक्त होता है । गुणादि मूर्त = मूर्तत्वजातिवाले नहीं होने से उसमें मूर्तनिष्ठलौकिकविषयता सम्बन्ध से गुणादि का समूहालम्बन चाक्षुष ही उत्पन्न हो सकता नहीं है । इसलिये उपदर्शित कार्यकारणभाव सुरक्षित रहता है । यहाँ इस शङ्का का कि → जन्यप्रत्यक्षत्व सामानाधिकरण्यसम्बन्ध से जन्यत्वविशिष्टप्रत्यक्षत्वस्वरूप होने से उद्भूत रूप के कार्यतावच्छेदकधर्म का शरीर गुरुभूत हो जायेगा←समाधान यह है कि जन्यप्रत्यक्षत्व इन्द्रियादिजन्यतावच्छेदकविधया

एतेन द्रव्यनिष्ठलौकिकविषयतासम्बन्धेन चाक्षुपत्वस्य कार्यतावच्छेदकत्व सम्भवति, द्रव्यनिष्ठलौकिकविषयतयोर्भेदाभावेन विनिगमनाविरहानवकाशात्, न तु मूर्तनिष्ठलौकिकविषयतासम्बन्धेन प्रत्यक्षत्वस्य, तस्य कार्याकार्यवृत्तित्वात्, जन्यप्रत्यक्षत्वस्य तथात्वे तु जन्यत्वस्य प्रध्वप्रतियोगित्वादिरूपस्य निवेशे गौरव, जन्यत्व-प्रत्यक्षत्वयोर्विशेष्यविशेषणभावे विनिगमनाविरहश्चेत्युक्तावपि न क्षतिरिति ।

केचितु निश्चिताऽव्यभिचारकतया द्रव्यचाक्षुपत्वमेवोद्भूतरूपकार्यतावच्छेदक, न तु सन्दिग्धव्यभिचारकमूर्तप्रत्यक्षत्वमित्याहुः ।

## ◆ हेमलता ◆

एतेन = जन्यप्रत्यक्षत्वस्य जन्यमात्रवृत्तिवैजात्यात्मकत्वेन, असय न क्षतिरित्यनेनान्वय' । द्रव्यनिष्ठलोकिकविपयतासम्बन्धेन चाक्षुपत्वस्य कार्यतावच्छेदकत्व = उद्भूतरूपनिरूपितकार्यतावच्छेदकत्व सम्भवति । अतो वायुस्पार्शन निराबाधम्, तस्योद्भूतरूपकार्यतावचेदकानाक्रान्तत्वात् । न च मूर्तनिष्ठलौकिकविपयतया चाक्षुपत्वमुद्भूतरूजन्यतावच्छेदकमुताहो द्रव्यनिष्ठलौकिकविपयतया ? इत्यत्र विनिगमनाविरह इति वाच्यम् गगनादेरप्रत्यक्षत्वेन द्रव्यनिष्ठ-मूर्तनिष्ठलौकिकविपयतयो = द्रव्यवृत्तिलोकिकविपयता-मूर्तवृत्तिलाकिकविपयतयो' भेदाभावेन = ऐक्येन विनिगमनाविरहानव काशात् । न चात्मनोऽपि मानसप्रत्यक्षोदयाद् द्रव्यनिष्ठलौकिकविपयताऽऽत्मवृत्ति किन्त्वद्त्मनोऽमूर्तत्वेन मूर्तनिष्ठालोकिकविपयता नात्मवृत्तिरिति तयोरसमनियतत्वेन भेद एवेति वक्तव्यम् प्रकृते चाक्षुपत्वस्य कार्यतावच्छेदकविधया विवक्षणेन चाक्षुपत्वावच्छिन्ननिरूपिताया एव द्रव्यनिष्ठलौकिकविपयताया जन्यतावच्छेदकससर्गविधयाऽभिमताया आत्मनिष्ठत्वाभावेन तयोः समनियतत्वेनाभेदात् । न तु मूर्तनिष्ठलोकिकविपयतासम्बन्धेन प्रत्यक्षत्वस्य उद्भूतरूपकार्यतावच्छेदकत्व सम्भवति, तस्य = केवलप्रत्यक्षत्वस्य कार्याऽकार्यवृत्तित्वात् = अस्मदादिप्रत्यक्षे त्रिलोचनप्रत्यक्षे च सत्त्वात् । अकार्यवृत्तित्वकथनादेवातिप्रसक्तत्वलाभेऽप्यसम्भवाशङ्कावारणाय कार्याकार्यवृत्तित्वादित्युक्तम् । न चास्तु तर्हि जन्यप्रत्यक्षत्वस्यैवाऽनतिप्रसक्तस्योद्भूतरूप-कार्यतावच्छेदकत्वमिति वाच्यम्, जन्यप्रतीत्वस्य तथात्वे = उद्भूतरूपजन्यतावच्छेदकत्वाभ्युपगमे तु जन्यत्वस्य प्रध्वमप्रतियोगित्तवादिरूपस्य कार्यतावच्छेदकधर्मकुक्षौ निवेशे कार्यतावचेदकधर्मशरीरकृत गोरव दुर्वार, जन्यत्वप्रत्यक्षत्वयो विशेष्यविशेषणभावे निनिगमनाविरहश्च । न हि जन्यत्वविशिष्टप्रत्यक्षत्वमुत्वद्भूतरूपकार्यतावच्छेदक प्रत्यक्षत्वविशिष्यजन्यत्व वा ? इत्यत्र किचिन्नियायक दर्शयितु पार्यते । न च द्रव्यलाकिकचाक्षुपत्वमप्युद्भूत रूपकार्यतावच्छेदक सम्भवति, शरीरगौरवेण लोकिकविपयतासम्बन्देन द्रव्यत्वविशिष्टचाक्षुपत्वरूपेण च द्रव्यत्वचाक्षुपत्वयोर्विनिगमनाविरहात् । ततो द्रव्यनिष्ठलौकिकविपयतया चाक्षुपत्वमेव केवलमुद्भूतरूपकार्यतावच्छेदकमिति वायोः स्पार्शनमनपाय इत्युक्तावपि न क्षति मूर्तवृत्तिलोकिकविपयतया जन्यप्रतीमात्रवृत्तिवैजात्यस्येन्द्रियादिजन्यतावच्छेदकतया सिद्धस्योद्भूतरूपकार्यतावचेदकत्वाभ्युपगमात् ।

केचित्तु उद्भूतरूपवद्घटादीना चाक्षुपत्वनिश्चयात् निश्चिताऽव्यभिचारकतया लोकिकविपयतासम्बन्धेन द्रव्यचाक्षुपत्वमेव उद्भूतरूपकार्यतावच्छेदक न तु वायूष्मादेः प्रत्यक्षत्वसन्देहेन सन्दिग्धव्यभिचारकमूर्तप्रत्यक्षत्व, सम्भवति निश्चिताऽव्यभिचारके धर्मे इक्ष्यमाणव्यभिचाररूपेण कारणत्ववत्कार्यत्वस्याऽपि

## ► वल्लभा ◄

सिद्ध जातिस्वरूप ही है । मतलव ही जन्यप्रत्यक्षत्व कार्यसाक्षात्कारमात्रवृत्ति वैजात्यात्मक है । जाति अखण्ड होने से उद्भूतरूप के कार्यतावच्छेदक धर्म के शरीर मे गोरव को भी अवकाश नही हे । प्रमाणन्तरसिद्ध जाति का ही कार्यतावचेदकधर्मविधया स्वीकार करने की वजह भी गोरव का अवकाश नही हैं ।

ऐतन० । यहाँ अन्य विद्वानो का यह कथन हे कि → "उद्भूतरूप का कार्यतावच्छेदकधर्म द्रव्यनिष्ठलोकिकविपयता सम्वन्ध से चाक्षुपत्व ही सम्भव है । 'द्रव्यनिष्ठालैकिकविपयता सम्वनन्ध को कार्यतावचेदकसम्वननन्ध माना जाय या मूर्तनिष्ठ लोकिक विपयता को ?' इस विनिगमनाविरह को भी अवकाश नहीं हे, क्योकि द्रव्यनिनष्ठ लौकिक विपयता ओर मूर्तनिष्ठ लोकिक विपयता, जो चाक्षुपत्वावच्छिन्ननिरूपित हे, दोनो समव्याप्य-व्यापक = समनियत होने से अभिन्न है । मगर मूर्तनिष्ठ लौकिक विपयता सम्वन्ध से प्रत्यक्षत्व को कार्यतावच्छेदक धर्म माना जा नही सकता, क्योकि वह अनित्य प्रत्यक्ष और नित्य प्रत्यक्ष दोनो मे रहने मे उद्भूतरूपकार्यतातिरिक्तवृत्ति धर्म है । अतिरिक्तवृत्ति धर्म अवच्छेदक वन सकता नही है । जन्यप्रत्यक्षत्व को भी उद्भूत रूप का कार्यतावच्छेदक नही माना जा सकता, क्योकि कार्यतावच्छेदकधर्मकुक्षि मे प्रध्वसप्रतियोगितास्वरूप जन्यता का निवेश करने के सवव गोरव प्रसक्त होता हे आर उद्भूतरूप का कार्यतावच्छेदकधर्म जन्यत्वविशिष्टप्रत्यक्षत्व माना जाय या प्रत्यीत्वविशिष्टजन्यत्व माना जाय ? इस विषय मे कोई विनिगमक नहि है । ←

मगर अव पछताये होत क्या जव चिडियाँ चूग गई खेत ? हमने पहले ही कह दिया कि उद्भूत रूप का कार्यतावच्छेदक मूर्तनिष्ठ लोकिक विपयता सम्वन्ध से जन्यप्रत्यक्षमात्रवृत्ति वैजात्य = जातिविशेष ही है, जिसके स्वीकार मे न तो गौरव है और न तो विनिगमनाविरह दोप हे, क्योकि वह इन्द्रियादिजन्यतावच्छेदकविधया सिद्ध अखण्ड जातिस्वरूप ह ।

## ◆ हेमलता ◆

शव्यभिचारसशयस्य कारणताग्रहप्रतिबन्धकत्वेऽपि उद्भूतरूपत्वेन कारणत्वे लाघवमिति लाघवज्ञानस्योत्तेजकतया उत्तेजकाभावविशिष्टताद्दशसशयरूपप्रतिबन्धकाभावेनोद्भूतरूपस्य कारणताग्रहसम्भवः । उद्भूतरूपस्य तु व्यभिचारनिर्णयवत्त्वेन तत्र लाघवज्ञानस्यानुत्तेजकतया कारणताग्रहो न सम्भवतीति [मु प्र पृ ४२५] मुक्तावलीप्रभाया नृसिहशास्त्रिणोक्त तन्न चारुतया सचेतसा चेतसि चकास्ति, वायोः न प्रत्यक्षत्वमाहोस्वित् प्रभाया इत्यत्रापि विनिगमनाविरहेण लाघवतर्कोत्तेजकत्वस्योभयत्र तुल्यत्वात्, पर्यनुयोगप्रत्यत्तुरयोरुभयत्र समत्वात् । न हीयमीश्वराज्ञा यद् वायोरेवाप्रत्यक्षत्व न प्रभाया इति ।

यत्तु 'उपरिदेशे विहङ्गम' इत्यत्र प्रभामण्डलस्यैवोपरिदेशतया तत्प्रत्यक्ष विना 'उपरिदेशे विहङ्गम' इति प्रत्यक्षानुपपत्तेः [मु दि पृ ४२५] इति मुक्तावलीदिनकरीयवृत्तावुक्त तदपि न सम्यक्, आलोकविरहेऽपि 'इह' इतिप्रतीतेः आलोकमण्डलातिरिक्तस्य क्षेत्रस्यैव तद्विषयत्वादिति स्याद्वादकल्पलताया व्यासतः प्रतिपादित ततोऽवसेयम् ।

यच्च तत्त्वचिन्तामणो 'द्रव्यस्य स्पार्शनत्वे उद्भूतस्पर्शमात्र न तत्र निदाघोष्मणि वायूपनीतशीतोष्णद्रव्ये च प्रत्यक्षत्वेन तद्गतसङ्ख्या-परिमाण-सयोग-विभाग-कर्मणा प्रत्यक्षत्वप्रसङ्गात् योग्यव्यक्तिवृत्तित्वेन तेपा योग्यतया द्रव्यग्राहकसामग्रीग्राह्यत्वावधारणात् । न चोष्मादिजातीये दोपाभावेऽपि घटादाविव करपरामर्शे कदाचित् केनाऽपि सङ्ख्या गृह्यते । तथोद्भूतरूपवत्त्वमात्रस्य तथात्वे चान्द्राद्युद्योतस्य नयनगतपित्तद्रव्यस्य च प्रत्यक्षत्वे तद्गतसङ्ख्याग्रहोऽपि स्यात् । न च घटादाविव निपुणतर निभालयन्तोऽपि तद्गतसङ्ख्याद्वित्वादि हस्त-वितस्त्यादिपरिमाण कर्म वा वीक्षामहे इत्येकैकव्यभिचारात् विनिगमकाभावादुभयमपि वहिरिन्द्रियद्रव्यप्रत्यक्षे प्रयोजकमिति वायुरप्रत्यक्ष' [त चि प्र ख पृ ७३] इति नवीनमतमुपदर्शित गङ्गेशेन, तन्न, उभयप्रयोजकताया गौरवादिति जयदेवमिश्रा ।

प्रकाशव्याख्याकृत् रुचिद्रतमिश्रस्तु प्रकृतास्वरसवीजमेवमाह— 'सौरतेजसः प्रत्यक्षत्वे तद्गतसङ्ख्यादिप्रत्यक्षतापत्तिरित्याद्यपि स्यात् । यदि च तत्प्रत्यक्षत्वेऽपि तदप्रत्यक्षतैव, औत्सर्गिकत्वेऽपि तन्नियमस्येहाऽसम्भवेन त्यागात् । तदा लाघवेनोद्भूतरूपवत्त्वमात्रमेव तथास्तु । चन्द्राद्युद्योतादेः प्रत्यक्षत्वेऽपि तत्सङ्ख्यादीना तद्वदेवाऽप्रत्यक्षत्वोपपत्तेः । विष्वग्विसारिसरूपसजातीयसवलनरूपदोपात्तदनुपलम्भ इत्यपि तुल्यमिति' [त चि प्र पृ ७९८] तदसत् उद्भूतस्पर्शस्यैव स्पार्शनजनकत्वात् । एतेन प्रभाचाक्षुपे व्यभिचारः प्रत्यस्तः, प्रभाचाक्षुपत्वस्योद्भूतस्पर्शकार्यतानवच्छेदकत्वात् ।

वस्तुतस्तु द्रव्यस्य स्पार्शनत्वेन न तद्गतसङ्ख्यादिप्रत्यक्षत्वप्रसङ्गः, योग्यव्यक्तिवृत्तिगुणाना सार्वत्रिकयोग्यत्वनियमस्यैवाऽसिद्धत्वात् । दृष्ट हि पृष्ठलग्नवस्त्रसमुद्रजलसिकतादिप्रत्यक्षत्वेऽपि तद्गतसङ्ख्या-परिमाण-सयोगादीनामग्रहणम् । दोपाभावे सत्येव द्रव्यसाक्षात्कारे तद्गतगुण- साक्षात्कारनियमात् । सङ्ख्यादेर्द्रव्यग्राहकसामग्रीग्राह्यतानियमस्यौत्सर्गिकत्वेनाऽदोप इति भावः । 'गुणप्रत्यक्षत्वाद् गुणिनोऽपि प्रत्यक्षत्वमिति तु पर्याये द्रव्यारोपेण शक्त्यादीना द्रव्यार्थतया प्रत्यक्षत्ववद् द्रव्ये पर्यायारोपेण पर्यायोपचारपर्यवसित भवेदित्यधिक प्रमेयमालाया वायुप्रकरणादवसेयमिति दिक् ।

स्याद्वादमुद्रयोक्त हि वायुः प्रत्यक्ष इष्यताम् ।
तत्परिमाणसङ्ख्याग्रहो नियतो न वेति किम् ॥१॥

इति मुनियशोविजयविरचिताया हेमलताभिधानाया वादमालाटीकाया षष्ठो वाद । ॥



   

     

## ● सप्तमः शब्दनित्यत्वानित्यत्ववादः ●

शब्दो नित्यः, 'सोऽयं गकारः', 'श्रुतपूर्वोऽयं गकारः' इतिप्रत्यभिज्ञानान्यथानुपपत्त्या तत्सिद्धेः । 'उत्पन्नो गकारो विनष्टो गकार' इत्यादिप्रतीतेः भ्रमत्वात्, अन्यथानन्तशब्दप्रागभाव-प्रध्वंसादिकल्पने गौरवात् । एतेनाऽनन्तोत्पत्त्यादिप्रतीतीनां भ्रमत्वमपेक्ष्य प्रत्यभिज्ञामात्रस्य तत्त्वकल्पने लाघवमिति अपास्तम्, प्रत्यभिज्ञानामप्यानन्त्याच्च । ज्ञानबाहुल्ये विषयबाहुल्यस्याऽप्रयोजकत्वात् ।



### हेमलता

सम्मृत्य शारदादेवीं नत्वा गुरुं च भावतः ।
शब्दे महेतुकत्वं वाऽन्यथा वेति विचार्यते ॥१॥

मीमांसकनैयायिकयोः 'शब्दो नित्यो न वा' इति विप्रतिपत्तिः । तत्र 'शब्दः = शब्दपदप्रतिपाद्यः नित्यः = प्रागभावध्वंसाऽप्रतियोगी एव' इति विधिकोटिवादिनो मीमांसकाः । न च कुतः तत्सिद्धिः ? इति वाच्यम् 'सोऽयं गकारः यमेव पूर्वमश्रौषं', 'श्रुतपूर्वोऽयं गकारः' इतिप्रत्यभिज्ञानान्यथानुपपत्त्या = दर्शितसार्वलौकिकस्वारसिकाऽबाधितप्रत्यभिज्ञानप्रमाणान्यथानुपपत्त्या तत्सिद्धेः = शब्दस्य नित्यत्वनिश्चयात् । श्रुत-श्रूयमाणगकाराऽभेदसाधकप्रत्यभिज्ञानस्याऽबाधाच्छब्दस्यैकान्तनित्यत्वमित्याशयः । न च 'उत्पन्नो गकारो विनष्टो गकार' इतिप्रतीतेरपि सद्भावात् अभेदविषयिण्या निरुक्तप्रत्यभिज्ञाया बाध इति वाच्यम् 'उत्पन्नो गकारो विनष्टो गकार' इत्यादिप्रतीतेः भ्रमत्वात्, भ्रमस्य बाधकत्वात् । न चात्रैवाऽविनिगम इति वाच्यम्, अन्यथा = शब्दोत्पादादिप्रतीतेः प्रमात्वोपगमे अनन्तशब्दप्रागभाव-प्रध्वंसादिकल्पने गौरवात् । शब्दोत्पादादिप्रतीतेः वायूत्पादादिविषयताकत्वमेवेति न तस्याः प्रत्यभिज्ञाबाधकत्वम् । शब्दव्यञ्जकवायूत्पादविनाशौ सामीप्यादिदोषवशाच्छब्दे आरोप्येते यथा जपाकुसुमगतरक्तिमा सन्निहितस्फटिकशकलादौ, उत्पत्तेः स्वत्वगर्भत्वेऽपि खण्डशः तदारोपसम्भवात् । अतो न पूर्वापरकालीनगकाराऽभेदावगाहित्वे निरुक्तप्रत्यभिज्ञाया अप्रामाण्यम् ।

एतेन = शब्दोत्पादादिकल्पने गौरवप्रतिपादनेन, अपास्तमित्यनेनास्यान्वयः । अनन्तोत्पत्त्यादिप्रतीतीनां भ्रमत्वमपेक्ष्य प्रत्यभिज्ञामात्रस्य तत्त्वकल्पने = भ्रमत्वकल्पनाया लाघवमिति नैयायिकमतमपि अपास्तम्, शब्दोत्पादादिगौरवस्योक्तत्वात्, शब्दोत्पादादिप्रतीतीनामिव प्रत्यभिज्ञानामपि आनन्त्याच्च । प्रत्यभिज्ञानां विषयतयैक्येऽपि स्वरूपतोऽनन्तत्वान्न तदप्रामाण्यस्वीकारः सम्भवति । न चोत्पद्यमानभेदेनोत्पत्तेर्नानात्वात् प्रतियोगिभेदेन विनाशस्याऽपि नानात्वात् जन्मनाशगोचरप्रतीतीनामानन्त्यं युक्तिमत्, प्रत्यभिज्ञायास्त्वभिन्नविषयकत्वान्न भेद इति वाच्यम् नानाविषयग्राहित्वेऽपि समूहालम्बनप्रतीतेरेकत्वात् एकविषयेऽपि कालभेदेनानन्तज्ञानोत्पत्तेश्च ज्ञानबाहुल्ये = ज्ञाननानात्वे विषयबाहुल्यस्य = गोचरनानात्वस्य अप्रयोजकत्वात् ।



### वल्लभा

#### ★☆ शब्द नित्य है - मीमांसक ★☆

'शब्द नित्य है या नहीं ?' इत्याकारक विप्रतिपत्ति मीमांसक और नैयायिक के बीच उपस्थित है । यहाँ विधिकोटिवादी है मीमांसक तथा निषेधकोटिवादी है नैयायिक । मीमांसकों का यह कथन है कि शब्द एकान्ततः नित्य है। इसका कारण यह है कि 'पहले जिस गशब्द को मैंने सुना था वही यह गशब्दगकार है' ऐसी अबाधित प्रत्यभिज्ञा होती है । प्रत्यभिज्ञा पूर्वापरकालीन पदार्थ में अभेद की साधक होती है । अतः उपर्युक्त प्रत्यभिज्ञा की अन्यथानुपपत्ति से पूर्वश्रुत और श्रूयमाण शब्द में ऐक्य = अभेद की सिद्धि होती है । अतएव 'शब्द उत्पन्न हुआ, शब्द नष्ट हुआ' इत्यादि प्रतीति भ्रमात्मक सिद्ध होती है । उत्पत्ति - विनाश के अप्रतियोगी शब्द में उत्पत्तिविनाश की प्रतियोगिता का अवगाहन करने से वह प्रतीति भ्रमात्मक सिद्ध होती है । यदि उपर्युक्त प्रतीति को भ्रमात्मक न मानी जाय तो अनन्त शब्द के प्रागभाव, प्रध्वंसाभाव आदि की कल्पना करनी पड़ेगी, जो गौरवग्रस्त है ।

#### शब्दैक्यप्रत्यभिज्ञा प्रमात्मक है

एते० । यदि यह कहा जाय कि → 'उत्पत्ति और विनाश की बहुतर प्रतीतियों को भ्रम मानने की अपेक्षा प्रत्यभिज्ञा को प्रमात्मक मानने में लाघव है । इसका कारण यह है कि उत्पाद आदि प्रतीति अनन्त है जब कि प्रत्यभिज्ञा एक ही है ← तो यह ठीक नहीं है, क्योंकि प्रत्यभिज्ञा भी विषय की दृष्टि से एक होने पर भी स्वरूपदृष्टि से अनन्त है । यदि यह कहा जाय कि →'उत्पत्ति उत्पद्यमान के भेद से तथा विनाश प्रतियोगी के भेद से अनंत है । अतः उन्हें विषय करनेवाली प्रतीतियों का आनन्त्य उचित है । किन्तु प्रत्यभिज्ञा तो पूर्वज्ञात और वर्तमान में ज्ञायमान विषय के अभेदाश्रय एक विषय को ही ग्रहण करती है । इसलिये उसका आनन्त्य अनुचित है'←तो यह कहना भी ठीक नहीं है, क्योंकि अनेक विषयों का ग्रहण करनेवाले समूहालम्बन ज्ञान के एक होने से तथा एक ही विषय को ग्रहण करनेवाले क्रमोत्पन्न ज्ञानों में भेद होने से विषयबाहुल्य में ज्ञानबाहुल्य

अथ तारमन्दादिभेदेन गकारादेर्नानात्वावश्यकत्वात्कथ प्रत्यभिज्ञयैक्यसिद्धिः ? तारत्वादीना वायुगतत्वे च कत्वादेरपि तद्गतत्वापत्तिः । 'कत्वादेस्तद्गतत्वे शब्दवृत्तित्वेन भान श्रावण न स्यादि'ति चेत् ? तारत्वादेरपि तद्गतत्वे तन्न स्यादिति तुल्यम् । 'गकारादौ तारत्वादेः परम्परयैव भानमिति' चेत् ? ककारादौ कत्वादेरपि तथैव भानमिति समानम् । एव वायुवृत्तित्वे तस्य श्रावणमेव न स्यात्, वायुस्पर्शादेरिव स्पार्शन वा स्यात्, जातित्वाच प्रति कत्वादीना प्रतिवन्धकत्वकल्पने च गौरवादित्युभयत्र

◆ हेमलता ◆

यौगःशङ्कते-अथेति तृतीयचेत्पदेनान्वेति । 'तारोऽय गकारः' 'मन्दः स गकारः' इत्यादिप्रतीत्या तारमन्दादिभेदेन = तारत्वमन्दत्वादिविरुद्धधर्माध्यासेन, गकारादे शब्दस्य नानात्वावश्यकत्वात् पूर्वापरकालीनगकारादिभेदस्य प्रमाणसिद्धत्वात् कथ प्रत्यभिज्ञया 'स एवाय गकारो य पूर्वमश्रौषम्'इत्यादिस्वरूपया पूर्वापरकालीनगकारादीना ऐक्यसिद्धि = अभेदनिश्चयः ? निरुक्तप्रतीतिप्रत्यभिज्ञयोः सार्वजनीनत्वेनोभयोपपत्तये प्रत्यभिज्ञायाः तज्जातीयाऽभेदविषयकत्वमेवास्तु व्यक्त्यभेदविषयिण्यास्तु तस्या भ्रमत्वमेव । न च पूर्वापरशब्दाभेदेऽपि शब्दव्यञ्जकवायुगततारत्वमन्दत्वादीनामस्तु शब्दे आरोपः सामीप्यवशादिति वाच्यम्, तारत्वादीना वायुगतत्वे = वायुवृत्तित्वोपगमे च प्रतीयमानस्य कत्वादेरपि तद्गतत्वापत्ति = वायुसमवेतत्वप्रसङ्गः इति नैयायिकाशयः ।

अथ कत्वादे तद्गतत्वे = वायुसमवेतत्वे शब्दवृत्तित्वेन = शब्दसमवेतत्वेन प्रसिद्ध भान = प्रत्यक्ष श्रावण = श्रोत्रेन्द्रियजन्य न स्यात् । अतःकत्वादेः शब्दवृत्तित्वमेव न तु वायुवृत्तित्वमिति चेत् ? न, तारत्वादेरपि किमुत कत्वादे' तद्गतत्वे = वायुसमवेतत्वे कत्वादिभानमिव तारत्वादिभानमपि तत् = शब्दवृत्तित्वेन श्रावण न स्यादिति तुल्यम् । न हि 'तारोऽय ककार' इति प्रतीतो तारत्वस्याऽशब्दवृत्तित्व कत्वस्य च शब्दवृत्तिमिति वक्तु शक्यते । अतः तारत्वादि -कत्वादीना शब्दगतत्वमेव न्याय्यमिति फलितम् ।

अथ 'तारोऽय गकार'इत्यत्र गकारादौ तारत्वादे परम्परया = स्वसमवायिपवनसयुक्तगगनसमवेतत्वसम्बन्धेन एव भान गत्वादेस्तु साक्षात्सम्बन्धेन समवायलक्षणेनैव भानमिति विवेक इति चेत् ? न, ककारादौ कत्वादे अपि तथैव = स्वसमवायिसयुक्तसमवेतत्वसम्बन्धेनैव भानमिति समानम् । अतः तारत्वादे' वायुसमवेतत्वोपगमे कत्वादेरपि तत्त्वापत्तिर्दुर्वारैव । एव = निरुक्तरीत्या 'वायुवृत्तित्वे तस्य = कत्वादेः भान श्रावणमेव न स्यात् । वायुस्पर्शादेरिव स्पार्शन वा स्यात् । न च कत्वादेः वायुगतत्वेऽपि जातिस्पार्शन प्रति कत्वादीना तादात्म्येन प्रतिवन्धकत्वान्न वायुस्पर्शादेरिव कत्वादेः त्वाचापत्तिरिति वाच्यम् लौकिकविषयतासम्बन्धेन जातित्वाच प्रति तादात्म्यसम्बन्धेन कत्वादीना प्रतिवन्धकत्वकल्पने न गौरवात्''- इति मीमासकवक्तव्य पुनः उभयत्र = कत्वादि-तारत्वाद्यस्पार्शनयोः समानम् । तथाहि वायुवृत्तित्वे तारत्वादेः श्रावणत्वमेव स्यात्

▶ वल्लभा ◀



की प्रयोजकता असिद्ध है ।

## ☆O तारत्वादिविशिष्ट शब्द भी नित्य O☆

नैयायिक : - अथ० । प्रत्यभिज्ञा के वल से पूर्वापरकालीन गकार आदि मे अभेद की सिद्धि हो नहीं सकती, क्योकि तार, मन्द आदि भेद से गशब्द आदि मे भेद को मानना आवश्यक है । 'तारोऽय गकार' 'मन्द स गकार', इत्यादि प्रतीति से गशब्द मे तारत्व, मन्दत्व आदि विरुद्ध धर्मो का अध्यास सिद्ध होता हे जिसकी वजह गकार आदि मे भेद को मान्य करना आवश्यक ह । 'तारोऽय गकार', 'मन्द स गकार' इत्यादि प्रतीति से गशब्द मे तारत्व, मन्दत्व आदि विरुद्ध धर्मों का अध्यास सिद्ध होता हे, जिसकी वजह गकार आदि मे भेद को मान्य करना आवश्यक हे । विरुद्धधर्माध्यास भेदसाधक होता है । यदि तारत्वादि धर्म को वायुगत मान कर उसका व्यग्य शब्द मे आरोप माना जाय तव तो कत्वादि धर्म को भी पवनवृत्ति मान कर उसका भी शब्द मे आरोप माना जा सकेगा । तुल्ययुक्ति से तारत्वादि की भाँति कत्व आदि भी वायुगत = वायुधर्म वन जायेगा ।

यदि मीमासक की ओर से यह कहा जाय कि—> कत्वादि धर्म को वायुगत माना जा नही सकता, क्योकि कत्व आदि को वायुगत माना जाय तव शब्दवृत्तित्वेन रूपेण कत्व आदि का भान हो नही सकेगा <— तो यह वक्तव्य तारत्व आदि धर्म का वायुगत मानने पर भी समान होगा कि कत्व आदि वायुवृत्ति होगा तो शब्दवृत्तित्वेन रूपेण तारत्वादि धर्म का भी भान हो नही सकेगा । यहाँ यह नही कहा जा सकता कि —> 'गकार आदि शब्द मे तारत्व आदि धर्म का भान स्वसमवायिसयुक्तसमवेतत्वलक्षण परम्परा सवन्ध से ही भान होता हे । तारत्व आदि के समवायी वायु द्रव्य से सयुक्त गगन मे समवेत शब्द मे उक्तसम्वन्ध से तारत्व आदि धर्म का भान हो सकता हे । इसलिये उक्त परम्परासम्वन्ध मे तारत्व आदि धर्म का गकार आदि मे आरोपित भान माना जा सकेगा <— यह कथन इसलिये अयुक्त है कि तुल्ययुक्ति से कत्व आदि धर्म को भी वायुगत मान कर स्वसमवायिसयुक्तसमवेतत्व सम्वन्ध से ककार आदि शब्द मे कत्व आदि धर्म का आरोपित भान माना जा सकता है । स्व = कत्व के समवायी = वायु

समानमिति चेत् ? न, तारमन्दशुकसारिकाचैत्रादिप्रभवभेदेनैव तस्य नानात्वात् । अत एव गकारादेरेकत्व- शुकप्रभवत्वादिवैलक्षण्यभान न स्यादित्यपास्तम् ।

◆ हेमलता ◆

वायुस्पर्शादेरिव स्पार्शन वा स्यात् । कत्वादेरिव तारत्वादेः जातित्वाच्च प्रति प्रतिबन्धकत्वकल्पने तत्परिहारस्याप्युभयत्र समत्वात् । गौरवमप्युभयत्र तुल्यमेव, तारत्वादेरपि जातित्वेन जातित्वाचप्रतिबन्धकताया' तारत्वादिसाधारणायाः कल्पयितु शक्यत्वात् । अतो वायुवृत्तित्वे कत्वादेरिव तारत्वादेरपि स्पार्शन न स्यादिति न तारत्वादेः वायुगतत्वकल्पना सङ्गता इति चेत् ?

निरुक्तनैयायिकमत मीमासको निराकरोति नेति । तार-मन्द-शुकसारिका-चैत्रादिप्रभवभेदेनेव तस्य = शब्दस्य नानात्वात् । अय मीमासकाशयः शब्दो न केवल एक एव किन्तु ककार-खकारादिभेदभिन्नो नानाविध एव । न च ककारात्मकोऽपि शब्दः एक एव किन्तु तारत्व-मन्दत्वादिजातिभेदान्नानव नित्यस्य तारादेः ककारस्यापि क्वचित् शुकप्रभववायुव्यङ्ग्यत्व कचित् सारिकाजन्यमारुताभिव्यङ्ग्यत्व कचिच्च चैत्रादिकर्तृकपवनप्राकट्यमिति दृष्टत्वात् शुकप्रभववायुव्यङ्ग्यत्वादिधर्मभेदादपि भेद एव । इत्यञ्च कत्व-खत्व-तारत्व-मन्दत्व-शुकादिप्रभवमरुदभिव्यङ्ग्यत्वादिधर्मभेदेन शब्दस्य परमार्थतो नानात्वेऽपि शब्दत्वावच्छिन्नस्य नित्यत्वमेवोक्तप्रत्यभिज्ञया सिध्यति । न हि विवक्षितशुकहेतुकानिलव्यक्ततारककारे कचित् कदाचित् कथञ्चित् भेद उपलभ्यतेऽस्माभि' । तस्य मन्दककार-तारखकारादिभिन्नत्व तु नैव मीमासकैरपाक्रियते ।

केचित्तु स्वरूपत' ककारादेस्तारत्वादिधर्मयोगाभावान्न नानात्व किन्तु तद्व्यञ्जकीभूतो यस्तारमन्दादिस्वरूप' शुक-सारिका-चैत्रादिप्रभवः प्रभञ्जनः तद्भेदेनैव नानात्वात्तदैक्यस्य पारमार्थिकस्योपाधिकनानात्वेन विरोधाभावात्प्रत्यभिज्ञया तत्सिद्धि' स्यादेवेति व्याख्यानयन्ति, तन्न, एव व्यञ्जकवायुगततारत्वादेरारोपत शब्दस्य नानात्वोपगमे वायुस्पर्शस्पार्शनादेरिव तस्य स्पार्शनापत्ते' तादवस्थ्यात्, अग्रिमग्रन्थाऽलग्नतापत्तेश्च ।

अत एव = शब्दस्य कत्व-तारत्व-शुकप्रभववायुव्यङ्ग्यत्वादिभेदेन भिन्नत्वाभ्युपगमादेव, अस्यापास्तमित्यनेनान्वय' । गकारादे शब्दस्य एकत्वे = अभिन्नत्वे शुकप्रभवत्वादिवैलक्षण्यभान न स्यात् । न हि स्वरूपतोऽभिन्ने विरुद्धधर्मभान सम्भवति । आरोपितस्य तस्य भाने तु कत्वादेरपि आरोपितस्यैव भानापत्तेः शब्दस्य निरुपाख्यत्वापत्तिरिति शङ्काशय' ।

अनुक्तोपालम्भोऽय, मीमासकेन तारमन्दादिशब्दानामभेदानभ्युपगमात् । शुकप्रभव-ककार-खकार-तार-मन्दादिभेदभिन्नशब्दस्वीकारात् शुकप्रभ-वत्वादिवैलक्षण्यभानमनपायमेवेति मीमासकाभिप्राय' ।

▶ वल्लभा ◀

से सयुक्त = आकाश मे शब्द समवेत हे ही । इस तरह शब्दवृत्तित्वेन कत्व आदि एव तारत्व आदि धर्म का आरोपित भान सङ्गत हो सकेगा । मगर यह तो मीमासक को भी मान्य नही हे ।

यहाँ मीमासक का यह वक्तव्य कि →'कत्व आदि को वायुगत मानने पर उसका श्रावण प्रत्यक्ष ही हो नही सकेगा । जेसे वायुत्व आदि का श्रावण प्रत्यक्ष होता नही है ठीक वैसे ही । या तो कत्व आदि का स्पार्शन प्रत्यक्ष होने की आपत्ति आयेगी । जसे वायुस्पर्श आदि का स्पार्शन प्रत्यक्ष होता है ठीक वैसे ही कत्व आदि के स्पार्शन प्रत्यक्ष की आपत्ति आयेगी । लौकिक विषयता सम्बन्ध से जातिस्पार्शन साक्षात्कार के प्रति कत्व आदि जाति को प्रतिबन्धक मानने पर कत्व आदि के अस्पार्शन की उपपत्ति होने पर भी तादृश प्रतिबध्यप्रतिबन्धकभाव की कल्पना का गौरव प्रसक्त होगा' ← भी निराधार हैं, क्योकि तुल्ययुक्ति से तारत्वादि को वायुगत मानने पर तारत्व आदि का भी श्रावण प्रत्यक्ष हो नहीं सकेगा या तो तारत्व आदि का स्पार्शन प्रत्यक्ष होने की आपत्ति आयेगी । एव लौकिक विषयता सम्बन्ध से जातित्वाच प्रत्यक्ष के प्रति कत्वादि जाति मे तादात्म्येन प्रतिबन्धकता का स्वीकार किया जायेगा उसको तारत्वादि जाति मे भी मान्य की जा सकती है । जिसकी वजह वायुगत तारत्वादि जाति का स्पार्शन प्रत्यक्ष परिहृत हो जायेगा । गौरव तो उभयपक्ष मे तुल्य ही रहेगा । इसलिये तारत्वादि को वायुगत माना जा नही सकता ।

मीमासक :- न० । जनाव ! आपका यह वक्तव्य सङ्गत नही हे, क्योकि कत्व, खत्व आदि के भेद से शब्दभेद जैसे हमे मान्य ह ठीक वैसे ही तारत्व, मन्दत्व, शुकजन्यवायुव्यङ्ग्यत्व, सारिकाजन्यवायुव्यङ्ग्यत्व आदि विरुद्धधर्म के भेद से भी शब्दभेद मान्य हे । मतलब यह हे कि शब्द एक नहीं हैं किन्तु क, ख आदि भेद से भिन्न हैं ठीक वैसे ही तार (=तीव्र), मन्द आदि भेद से भिन्न हे । चैत्रीयवायु से व्यग्य तार गकार सर्वदा एक ही होता हे, नित्य होता ह । अर्थात् वैधर्म्यवाले शब्द परस्पर भिन्न है मगर नित्य हे, अनित्य नही । इस तरह शब्द को अनेकविध एव नित्य मानने पर तारत्वादिप्रतीति एव प्रत्यभिज्ञा की भी सङ्गति हो जायेगी । अतएव यहाँ इस शङ्का को कि → 'गकार आदि एक होने पर शुकप्रभवत्व आदि वेलक्षण्य का भान नही हो सकेगा,

यत्तु मीमासकाना 'चैत्रादेः स्वीयमैत्रशुकादिककारादेः प्रत्यक्षे चैत्रादिकर्णावच्छिन्नविजातीयवायुसयोगा हेतवो वाच्या' इत्यतिगौरवम्, नैयायिकानान्तु 'अवच्छेदकतया चैत्रादिककारादौ विजातीयवायुसयोगो हेतुस्तत्पुरुषीयनिखिलशब्दप्रत्यक्षे च

◆ हेमलता ◆

घटादौ श्यामत्व-रक्तत्वादिवदेकत्राऽपि शब्दे तारत्व-मन्दत्वादिसम्भवान्न 'तारोऽय' 'मन्दोऽय' इत्यादिप्रतीत्यसम्भवो न वा प्रत्यभिज्ञाया व्यक्त्यभेदविषयकत्वे भ्रमत्वमिति मीमासकैकदेशीय ।

अस्तु वा तारत्वादिजातिः शब्दमात्रवृत्तिरेव, विजातीयपवनवशात्तु क्वचित् कदाचिदभिव्यक्तिरितीतरे ।

पदार्शमालाकृतो मतमपाकर्तुमाह - यत्तु इति तच्चिन्त्यमित्यनेनान्वेति । मीमासकाना मते शब्दस्य नित्यत्वे चैत्रादे लौकिकविषयतासम्बन्धेन स्वीय-मेत्र-शुकादिककारादे प्रत्यक्षे = श्रावणत्वावच्छिन्न प्रति चेत्रादिकर्णावच्छिन्नविजातीयवायुसयोगा हेतवो वाच्या । न च ककारादिश्रावणत्वमेव विजातीयवायुसयोगकार्यतावच्छेदकमिति गारवमितिवाच्यम्, चैत्रकर्णे चेत्रीयादिककारादिव्यञ्जकविजातीयवायुसयोगसत्त्वे दूरस्थाना यज्ञदत्तादीना तादृशककारादिश्रावणापत्तिवारणाय कार्यतावच्छेदकधर्मकुक्षौ चैत्रीयत्वादिनिवेशस्यावश्यकत्वेन गौरवस्यानिराकार्यत्वात् । एव कारणतावच्छेदकधर्मकोटौ चैत्रादिकर्णाऽप्रवेशे तु परुपान्तरकर्णावच्छिन्नस्य ककारादिव्यञ्जकस्य विजातीयवायुसयोगस्य सत्त्वेऽपि चैत्रादेः ककारादिप्रत्यक्षापत्तिः । अतः तत्राऽपि अनन्तचैत्रादिकर्णनिवेशावश्यकत्वेन महागौरवम् । चैत्र-मैत्रादिकर्णावच्छिन्नवायुसयोगाभिव्यक्तककारादीना नित्यत्वाद् विभिन्नव्यक्त्यभिव्यञ्जित-ककारादिप्रत्यक्षवैलक्षण्यमनुपपन्नमिति तदन्यथानुपपत्त्या चैत्रीयादिककारादिश्रावणत्वावच्छिन्नकारणतावच्छेदककोटौ वैजात्यनिवेशस्याप्यावश्यकत्वमिति गोरवम् । एवञ्चैत्रकर्णगत-चैत्रीयककारमेत्रीयककार-शुकीयादिककाप्रत्यक्षेऽपि नानाविजातीयवायुसयोगाना कारणत्वे तत्र चेत्र-मैत्रादिनानापुरुषनिवेशावश्यकत्वे अतिगौरव = अनन्तकार्यकारणभावगौरवापत्तिर्मीमासकाना मत इति पदार्थमालाकृदभिप्राय' ।

नैयायिकाना मते तु ककारादीनामनित्यत्वेन नानात्वेन च तथा तदुत्पादकाना वायुसयोगानामपि विनाशित्वेनाऽव्यापकत्वेन विजातीयत्वेन च कार्यता-कारणतावच्छेदककोटावनन्तपुरुषाऽनिवेशेन लाघव यतः तन्मते अवच्छेदकतया = अवच्छेदकतासम्बन्धेन चेत्रादिककारादो = विजातीयककारात्वाद्यवच्छिन्न प्रति, - अवच्छेदकतासम्बन्धेन विजातीयवायुसयोगो हेतु । न च शब्दाऽनित्यत्वे चैत्रादेः स्वीय-चेत्रीयशुकीयादिककारादिश्रावणत्वावच्छिन्ने किं कारणम् ? इति शङ्कनीय, शब्दाऽनित्यत्वपक्षे तत्पुरुषीयनिखिलशब्दप्रत्यक्षे = शब्दनिष्ठलौकिकविषयतास-

▶ वल्लभा ◀

क्योकि एक मे विरुद्ध धर्म नामुमकिन है'← भी अवकाश रहता नही हे, क्योकि तार, मन्द, शुकयपवनव्यङ्ग्य ककार आदि मे भेद हम मीमासको को मान्य ही हैं। अनेक शब्द का स्वीकार करने से भिन्न भिन्न शब्द मे तारत्व, मन्दत्व, शुकीयपवनव्यङ्ग्यत्व आदि विलक्षण धर्मों का भान होने मे कोई विरोध आदि दोष नही ह । इसलिये तार, मन्द आदि अनेक शब्द नित्य ही सिद्ध होते हे ।

## ◆◆ नैयायिकमत मे लाघव की आशङ्का ◆◆

यत्तु । यहाँ शब्दअनित्यतावादि नेयायिक का शब्दनित्यतावादी मीमासक के प्रति यह आक्षेप हे कि → शब्दनित्यत्वपक्ष मे चेत्र आदि को स्वीय = चेत्रीय ककारादि, मेत्रीय ककारादि, शुकीय आदि ककार आदि के प्रत्यक्ष मे चैत्र आदि के कर्ण से अवच्छिन्न विजातीय वायुसयोग को हेतु मानना होगा, अन्यथा कार्यदल मे चेत्र आदि का निवेश न करेगे तो चेत्र आदि के कर्ण मे चैत्रीय, मेत्रीय, शुकीय आदि ककार आदि के व्यञ्जक विजातीय वायुसयोग के होने पर चैत्रादि से अन्य दूरस्थ देवदत्त आदि को भी उपर्युक्त ककार आदि के श्रावण साक्षात्कार की आपत्ति आयेगी । एव कारणदल मे चेत्रादिकर्ण का निवेश न करने पर पुरुषान्तर के कर्ण मे ककारादि के व्यञ्जक विजातीय वायुसयोग के होने पर चेत्रादि को ककारादि के श्रावण प्रत्यक्ष की आपत्ति आयेगी । अत शब्दनित्यत्वपक्ष मे शब्द ओर विजातीय वायुसयोग आदि मे व्यङ्ग्य-व्यञ्जकभाव की कल्पना करने मे अत्यन्त गौरव हे । जब कि शब्दाऽनित्यतावादि नैयायिको के मत मे इस प्रकार के गोरव को अवकाश नही ह, क्योकि नेयायिकमत मे अवच्छेदकता सम्बन्ध से विजातीय ककार आदि मे विजातीय वायुसयोग अवच्छेदकतासम्बन्ध से कारण होता हे । एव तत्पुरुषीय निखिल शब्द के श्रावण प्रत्यक्ष मे तत्पुरुषीय कर्णावच्छिन्न समवाय हेतु बनता हैं । इसलिये लाघव है । आशय यह हे कि शब्दनित्यत्ववादी मीमासको के मतानुसार क, ख, ग आदि वर्ण सर्वदा और सर्वत्र सब के लिये समान ही हे, अभिन्न ही है ओर उसकी अभिव्यक्ति चैत्र आदि किसीसे भी होने पर उसमे कोई विलक्षणता होती नही हे, क्योकि नित्य ओर अभिन्न होने से उसमे वेजात्य नामुमकिन है। किन्तु विभिन्न व्यक्तियो से अभिव्यञ्जित एक ही वर्ण का श्रोता को विलक्षण श्रावण प्रत्यक्ष होता हे । इसकी उपपत्ति के लिये चेत्र के अपने ककार के साक्षात्कार मे चेत्रीयकर्णावच्छेद्य विजातीयवायुसयोग, मेत्रीय ककार के प्रत्यक्ष मे अन्य विजातीय वायुसयोग ओर शुक आदि के ककार के

तत्पुरुषावच्छिन्नसमवाय'इति लाघवमिति । तच्चिन्त्यम्, विजातीयवायुसयोगस्य स्वावच्छेदकश्रोत्रसयुक्तमनःप्रतियोगिकविजातीय सयोगसम्बन्धेन निखिलशब्दश्रावण प्रति हेतुत्वे मीमासकानामेवातिलाघवात् ।

◆ हेमलता ◆

म्बन्धेन तत्पुरुषसमवेतश्रावण प्रति च स्वनिरूपितप्रतियोगित्वसम्बन्धेन तत्पुरुषकर्णावच्छिन्नसमवाय = तत्पुरुषीयकर्णशष्कुल्यवच्छिन्नाकाशावच्छिन्नः समवाय' हेतुरिति । मीमासकमते चैत्रादेः स्वीय-मैत्रीय-शुकीयादिककारश्रावणे यस्य चैत्रादिकर्णावच्छिन्नविजातीयवायुसयोगस्य कारणत्व तद्भिन्नस्यैव चैत्रादिकर्णावच्छेद्यविजातीयवायुसयोगस्य स्वीय-मैत्रीय-शुकीयादिखकारश्रावणे चैत्रादिसमवेते कारणत्वमित्येव स्वीकारावश्यकत्वे महागौरव स्पष्टमेवेति पदार्थमालाया प्रत्यपादि तच्चिन्त्यम् ।

यतो नित्यत्वपक्षेऽपि अवच्छेदकतासम्बन्धेन विजातीयककारादिप्रत्यक्षेऽवच्छेदकतासम्बन्धेन विजातीयसयोगस्य कारणत्वमवच्छेदकतया तत्तत्कर्णावच्छिन्नप्रत्यक्षे च तादात्म्येन तत्तत्कर्णस्य कारणत्वमिति स्वीकारे गौरवविरहात् । प्रत्युत विजातीयवायुसयोगस्य स्वावच्छेदकश्रोत्रसयुक्तमनप्रतियोगिकविजातीयसयोगसम्बन्धेन निखिलशब्दश्रावण प्रति = समवायसम्बन्धावच्छिन्नकार्यताश्रय-सकलशब्दश्रावणमात्रवृत्तिवैजात्यावच्छिन्न प्रति हेतुत्वे स्वीक्रियमाणे तत्तत्कर्णाना पृथगहेतुत्वात् मीमासकानामेवातिलाघवात् । समवायेन यत्रात्मनि श्रावणमुपजायते तत्रैव विजातीयवायुसयोगो निरुक्तसम्बन्धेन

► वल्लभा ◄

प्रत्यक्ष मे भिन्न विजातीय वायुसयोग को कारण मानना होगा । इस प्रकार विभिन्न व्यक्तिओ से अभिव्यञ्जित एक ही ककार आदि के प्रत्यक्ष मे विभिन्न विजातीय वायुसयोगो को कारण मानना होगा एव एक श्रोता को जो ककार आदि का प्रत्यक्षात्मक कार्य होता है, उसमे विभिन्न उच्चारणकर्ताओ का निवेश करना होगा । जैसे चैत्रगत मैत्रीयककारप्रत्यक्ष, चैत्रगत शुकीयकवर्णसाक्षात्कार आदि मे विभिन्न विजातीय वायुसयोगो को कारण मानना होगा । इस प्रकार कार्यदल मे ककार आदि मे विभिन्न उच्चारणकर्ताओ का निवेश करने के सबब प्रति श्रोता को होनेवाले कवर्ण के प्रत्यक्ष को लेकर अनन्त गुरुतर कार्यकारणभाव की कल्पना होने से अपार गौरव ह । किन्तु शब्दाऽनित्यपक्ष मे विभिन्न उच्चारणकर्ताओ के निवेश की आवश्यकता नही हैं । अतएव इस कार्यकारणभाव मे उत्पाद्य और उत्पादक के वैजात्यभेद से ही भेद होता है, उच्चारणकर्ता के भेद से भेद होता नही है । श्रोता को कवर्णआदि का विलक्षण साक्षात्कार होता है यह विषयभूत ककारादि के वैजात्य से ही सम्पन्न हो जाता है । अतएव तदर्थ विजातीय कारण की कल्पना की आवश्यकता होती नही है, किन्तु सामान्यत शब्दनिष्ठविषयतासम्बन्ध से तत्पुरुषीय श्रावण साक्षात्कार के प्रति तत्पुरुषीय कर्णावच्छेद्य समवाय को प्रतियोगित्व सम्बन्ध से कारण मान लेने से काम चल जाता हे - सब सङ्गत हो जाता है, क्योकि जो भी शब्द तत्पुरुषीयकर्णावच्छेदेन उत्पन्न होगा उसमे तत्पुरुषीयकर्णावच्छिन्नसमवाय स्वप्रतियोगितासम्बन्ध से रहेगा और उस शब्द मे उत्पादकाधीन जो वैजात्य होगा उस वैजात्यरूप से उस शब्द का तत्पुरुष को साक्षात्कार हो जायेगा । अत शब्दअनित्यत्वपक्ष मे उच्चारणकर्ता के भेद से और विजातीय वायुसयोग आदि के भेद से न तो शब्द और वायुसयोग के कार्यकारणभाव मे गौरव है एव न तो तत्पुरुषीयशब्दप्रत्यक्ष और तत्पुरुषीयकर्णावच्छिन्न समवाय के कार्यकारणभाव मे गौरव है । अत शब्दनित्यत्ववादी मीमासक की अपेक्षा शब्दअनित्यत्ववादी नैयायिक के मत मे स्पष्ट ही लाघव है ।

## ▲▲ मीमासकमत मे गौरव का परिहार ▲▲

तच्चि० । मगर शब्दनित्यत्ववादी मीमासक का उपर्युक्त नैयायिकआक्षेप के खिलाफ यह वक्तव्य है कि उक्त रीति से शब्दअनित्यत्वपक्ष का लाघव से समर्थन करना मुनासिब नही है, क्योकि नित्यत्वपक्ष मे भी ककार आदि के विजातीय प्रत्यक्ष मे अवच्छेदकतासम्बन्ध से विजातीय वायुसयोग को और तत् तत् कर्णावच्छिन्न ककारादिसाक्षात्कार मे तत् तत् कर्ण को कारण मान लेने से गौरव नही होगा । प्रथम कार्यकारणभाव मे कार्यता और कारणता दोनो अवच्छेदकतासम्बन्ध से अभिमत है । दूसरे जन्यजनकभाव मे कार्यता का अवच्छेदक सम्बन्ध हे अवच्छेदकता और कारणता का अवच्छेदकसम्बन्ध है तादात्म्य । दूसरी बात यह है कि दूसरे कार्यकारणभाव को मान्य करने की आवश्यकता नही है किन्तु एक यही हेतु-फलभाव मानना मुनासिब है कि समवायसम्बन्ध से ककारादि सकल के साक्षात्कार मे स्वावच्छेदकश्रोत्रसयुक्तमन प्रतियोगिकविजातीयसयोगसम्बन्ध से विजातीय वायुसयोग कारण है । आशय यह प्रतीत होता ह कि यज्जातीय पवन के यज्जातीयसयोग सम्बन्ध से चैत्र के कण्ठ से ककार अभिव्यक्त होगा, तज्जातीयपवन के तज्जातीयसयोग की श्रोता के मन सयुक्त कर्ण मे उत्पत्ति होने पर श्रोता को चैत्रकण्ठाभिव्यक्त ककार का प्रत्यक्ष होगा । इसी तरह खकार, गकार आदि सकल शब्द के साक्षात्कार मे ज्ञातव्य हे । यहाँ विजातीय पवनसयोग को जिस सम्बन्ध से कारण कहा गया हे उस सम्बन्ध की कुक्षि मे स्वपद से श्रोता के कर्णावच्छेदेन उत्पन्न होनेवाला विजातीय वायुसयोग अभिमत हे । उसका अवच्छेदक है श्रोत्र, उससे सयुक्त ह मन, उस मन का विजातीयसयोग हे आत्मा और मन का विजातीयसयोग जो श्रोतृभूत आत्मा मे रहता है । अत उस

एतेन जन्यत्वपक्षे विजातीयपवनसयोगस्य कत्व जन्यतावच्छेदकमिति लाघव, व्यङ्ग्यत्वपक्षे तु कप्रत्यक्षत्व कश्रावणत्वादिक वेति गौरवमिति निरस्तम्, उक्तरीत्या सामान्यत एव हेतुत्वे क्लृप्ते कप्रत्यक्षवाद्यवच्छिन्न प्रति तदकल्पनात्, स्वाश्रयविपयतासम्वन्धेन कत्वस्यैव तज्जन्यतावच्छेदकत्वसम्भवाचेति मीमासकानुयायिन ।

◆ हेमलता ◆

वर्तते एव, स्वस्य = विजातीयपवनसयोगस्यावच्छेदकेन श्रोत्रेण सयुक्त यन्मनः तत्प्रतियोगिकात्मानुयोगिकविजातीयसयोगाश्रयत्वात्तदात्मनः । इत्यश्च विपयनिष्ठप्रत्यासत्त्या पूर्वोक्तकार्यकारणभावाङ्गीकारे तत्तदनन्तपुरुपनिवेशे गौरवात्त परिहृत्याऽऽत्मनिष्ठप्रत्यासत्त्या एव निरुक्तहेतु-फलभावस्वीकारादतिलाघव मीमासकमते स्पष्टमेव ।

किञ्च शब्दस्य जन्यत्वे वीणाकाशादीनामप्यनन्तहेतुता कल्पनीया न तु शब्दव्यङ्ग्यत्वनये ।

एतेन = शब्दजन्यत्वपक्षेऽनन्तहेतुतोपदर्शनेन, निरस्तमित्यनेनास्यान्वय' । शब्दस्य जन्यत्वपक्षे विजातीयपवनसयोगस्य कत्व जन्यतावच्छेदक न तु कप्रत्यक्षत्वादिक इति नैयायिकमते लाघव = कार्यतावच्छेदकधर्मशरीरकृतलाघवम् । व्यङ्ग्यत्वपक्षे तु विजातीयवायुसयोगनिरूपितकार्यताया अवच्छेदक कप्रत्यक्षत्व कश्रावणत्वादिक वा स्वीकर्तव्यमिति मीमासकमते गौरव = कार्यतावच्छेदकधर्मशरीरकृतगौरवमिति नैयायिकवचन निरस्तम्, उक्तरीत्या सामान्यत एव = शब्दमात्रश्रावण प्रत्येव, विजातीयपवनसयोगस्य हेतुत्वे क्लृप्ते कप्रत्यक्षत्वाद्यवच्छिन्न प्रति तदकल्पनात् = विजातीयवायुसयोगकारणतानुपगमात् । न च सामान्यत' फल-फलवद्भावस्वीकारेऽपि विशेपतः कार्यकारणभावकल्पने गौरवमनपायमेवेति वाच्यम् स्वाश्रयविपयतासम्वन्धेन = स्वाश्रयविपयकलौकिकश्रावणनिष्ठविपयितासंसर्गेण कत्वस्यैव तज्जन्यतावच्छेदकत्वसम्भवाच्च = विजातीयपवनसयोगनिरूपि-तकार्यतावच्छेदकत्वोपपत्तेश्च । स्वस्य= कत्वस्याश्रयो यः ककारः तल्लौकिकसाक्षात्कारे निष्ठायाः विपयिताया विजातीयवायुसयोगकार्यमात्रवृत्तित्वेन तादृशविपयितासम्वन्धेन कत्वस्य विजातीयपवनसयोगकार्यताऽन्यूनानतिरिक्तवृत्तित्वेन तत्कार्यतावच्छेदकत्वसङ्गतेर्न कार्यतावच्छेदकधर्मशरीरगौरव मीमासकमते प्रसज्यते । न च समवायापेक्षयोक्तसम्वन्धेन गौरवमिति वक्तव्यम् सम्बन्धगौरवस्यादोपत्वात् ।

वस्तुतो निरुक्तसम्वन्धेन शब्दत्वमेव मीमासकमते जन्यतावच्छेदकमिति कत्वाद्यवच्छिन्न प्रति नानाहेतुताकल्पने नैयायिकस्यैव गौरवात् । एतेन तव स्वावच्छेदकश्रोत्रसयुक्तमनःप्रतियोगिकविजातीयसयोगसम्वन्धेन हेतुता मम तु अवच्छेदकतयेति लाघवमित्यपि प्रत्युक्तम्, तथापि चैत्रत्वाद्यन्तर्भावेनानन्तकार्यकारणभावगौरवस्य नैयायिकमते दुर्वारत्वाच्च । एवञ्च समानविपयककाकाराद्यनुमितौ विजातीयपवनसयोगघटितश्रावणसामग्र्याः प्रतिवन्धकत्वकल्पनागौरवमप्यनुद्भाव्यमेव, चैत्रकर्णसयोगावच्छिन्नसमवायघटितसामग्र्या एव तथात्वे प्रत्युत गौरवात् ।

अथ तथापि गकारादौ गुणत्वादेः ककारभेदादेश्च ग्रहाय पृथक् पृथक् विजातीयपवनसयोगस्याऽनन्तहेतुताकल्पने गौरवमिति चेत् ? तर्हि श्रावणत्वावच्छिन्न प्रत्येवोपदर्शितसम्वन्धेन हेतुताऽस्तु ।

एके तु दोपाभावाना हेतुतापेक्षया विजातीयवायुसयोगस्य पृथक् हेतुत्वमप्युचितमित्याहुः ।

अन्ये तु स्वनिरूपितलौकिकविपयतया गुणत्वग्रह प्रति प्रतियोगितासम्वन्धेन श्रावणविपयीभूतशब्दानुयोगिकसमवायस्य कारणत्वेन गकारवृत्तिगुणत्वग्रहोपपत्तिः । स्वनिरूपितलौकिकविपयतया ककारभेद-कत्वात्यन्ताभावादिप्रत्यक्ष प्रति श्रावणविपयीभूतखकारादिविशेपणताया हेतुत्वेन खकारादिवृत्तिककारभेद-कत्वात्यन्ताभावादिश्रावणसङ्गति । एतेन कोलाहले शब्दत्वेदन्त्वादिना ककारादिश्रावणमपि समर्थितम्, क्रमशः प्रोक्तकारणद्वयेन तदुत्पत्तिसम्भवात् इत्यप्याहु ।

► वल्लभा ◄

सम्वन्ध से विजातीयवायु का विजातीयसयोग भी श्रोतृभूत जीव मे रह जायेगा । इसलिये विजातीयवायुसयोग ककार आदि सकल वर्ण के साक्षात्कार मे कारण होता है । इस कार्यकारणभाव का स्वीकार करने पर तत् तत् कर्ण को तत् तत् कर्णावच्छिन्न ककारादिप्रत्यक्ष मे कारण न मानने से शब्दनित्यत्वपक्ष मे गौरवभाव नहीं है, अपितु शब्दअनित्यत्वपक्ष की अपेक्षा अत्यन्त लाघव भी है ।

▽▼ नित्यत्वपक्ष मे भी कत्व जन्यतावच्छेदक ▲△

एतेन० । नैयायिक का यहाँ यह कथन कि → 'शब्द को जन्य मानने पर विजातीयपवनसयोग का कार्यतावच्छेदक कत्व ही होगा, क्योकि विजातीय वायुसयोग से ककार उत्पन्न होता है । मगर शब्द को व्यङ्ग्य मानने पर विजातीय वायुसयोग का कार्य कप्रत्यक्ष या कश्रावण साक्षात्कार आदि होने से उसका कार्यताच्छेदक कप्रत्यक्षत्व या कश्रावणत्व आदि होगा । कत्व की अपेक्षा कप्रत्यक्षत्व को कार्यतावच्छेदक मानने मे गौरव स्पष्ट ही है । इसकी अपेक्षा कत्व को ही विजातीय वायुसयोग का कार्यतावच्छेदक मानना युक्त है'← भी पूर्वोक्त प्रतिपादन से ही निरस्त हो जाता है, क्योकि सामान्यत निखिल शब्दप्रत्यक्ष के प्रति ही विजातीय वायुसयोग मे कारणता आवश्यक है तव अनेकविध कार्यकारणभाव के स्वीकार का गौरव कैसे सावकाश होगा ? इसलिये कप्रत्यक्षत्व या कश्रावणत्व

अत्र वदन्ति उत्पत्तिविनाशरूपवैधर्म्यज्ञानकालोत्पत्तिकाया उक्तप्रत्यभिज्ञायास्तज्जातीयाभेदविषयकत्वान्नैक्यसाधकत्वम् । न

◆ हेमलता ◆

इतरे मीमांसकास्तु 'स एवायं गकारः' इत्यादिप्रत्यभिज्ञया गकारादेः तावत्कालावस्थानस्य विषयीकृतत्वेनाऽन्तराभूतशब्दादिनाऽनाशेन नाशकाभावाद्वर्णनित्यत्वसिद्धिः । न च तारत्वमन्दत्वादिग्रहो बाधक इति वाच्यम् 'य एव तारः स एवान्यापेक्षया मन्दः' इतिप्रतीतेः तारत्व-मन्दत्वादीनामविरोधादित्यपि वदन्ति ।

अपरे तु मीमांसकाः 'उत्पन्नः को विनष्टः कः' इत्यादिप्रतीतेः 'सोऽयं ककारः' इत्यादिप्रत्यभिज्ञायाश्च प्रामाण्योपपादनायोत्पादविनाशशालिप्रतीतेः कादिविषयकत्वं प्रत्यभिज्ञायाश्च ककाराद्यभिव्यक्तस्फोटो विषयः । स्फुट्यते ज्ञाप्यतेऽर्थोऽनेनेति व्युत्पत्त्याऽर्थस्मारको नित्यः शब्दविशेषः स्फोटः । स च पदस्फोटवाक्यस्फोटभेदात् द्विविधो भवति । पदज्ञाप्यस्फोटः पदस्फोटः । वाक्यज्ञाप्यस्फोटश्च वाक्यस्फोटः । वृत्त्या अर्थस्मारकत्वं स्फोटस्यैव पदवाक्ययोः स्फोटज्ञापकत्वात्परम्परयाऽर्थस्मारकत्वमिति वदन्ति ।

मीमांसकदेशीयास्तु 'सोऽयं' इत्यादिप्रत्यभिज्ञाबलात् वर्णानां नित्यत्वं, 'उत्पन्नः ककारो विनष्टः ककारः' इत्यादिप्रतीतेः ककारादिव्यञ्जकध्वनिविषयकत्वं ध्वनेरेव श्रोत्रग्राह्यत्वात्, उत्पादविनाशशालित्वाच्चेति प्रतिपादयन्ति ।

सर्वथानित्यता शब्दस्थले इत्थ प्रचक्षते ।
सर्वे मीमांसकास्तत्रेत्याहुः नैयायिकाः खलु ॥१॥

नैयायिकाः अत्र वदन्ति - 'उत्पन्नः को विनष्टः कः' इति उत्पत्तिविनाशरूपवैधर्म्यज्ञानकालोत्पत्तिकायाः 'स एवायं ककारो यं पूर्वमश्रोषमि'तिस्वरूपायाः उक्तप्रत्यभिज्ञायाः तज्जातीयाभेदविषयकत्वात् नैक्यसाधकत्वं = न पूर्वापरकालीनककाराद्यभेदनिश्चायकत्वम् । न च 'श्यामो नष्टः', रक्त उत्पन्नः' इति वैधर्म्यज्ञानकालेऽपि 'स एवायं घटः' इतिव्यक्त्यभेदविषयकत्वं प्रत्यभिज्ञाया यथा तथैवात्रापि किं न स्यादिति वाच्यम् तत्र घटादौ विशिष्टोत्पादादिप्रतीतेः शुद्धव्यक्त्यभेदाऽविरोधित्वेऽपीह शुद्धस्यैव ककारादेरुत्पादादिधीरितिविशेषात् ।

एतेन तादृशवैधर्म्यज्ञानाभावकालोत्पन्नपूर्वापरकालीनव्यक्त्यभेदविषयकप्रत्यभिज्ञया तदैक्यसिद्धावुत्पादादिप्रतीतेर्वायुसंयोगाद्युत्पादादिविषयकत्वस्य सुवचत्वात्, वह्न्यादौ धूमादिव्याप्तिभ्रमवद् नित्येऽपि शब्दे स्वत्वावच्छिन्नस्यापि सखण्डोत्पादस्य भ्रमसम्भवात्, साक्षाद्विरोधिनस्तत्पारिशेष्योत्पादस्य व्यावर्तकत्वेनाऽगृहीतत्वात् तद्बुद्धेर्व्यक्त्यभेदबुद्ध्यविरोधित्वाच्चेत्यपि प्रत्युक्तम्, लूनपुनर्जातकेशनखादिष्विव प्रत्यभिज्ञाया भ्रान्तत्वात्, तारमन्दशुकसारिकाप्रभवादिशब्देन नानाविधेष्वपि वर्णेषु प्रत्यभिज्ञानदर्शनेन तस्या भ्रमत्वावश्यकत्वात् शब्दस्य व्यङ्ग्यत्वे श्रावणजनकतावच्छेदिकाया जातेः पवनसंयोगे

▶ वल्लभा ◀

आदि धर्म मे अवच्छिन्न के प्रति विजातीय वायुसंयोग मे कारणता की कल्पना क्यो की जाय ? दूसरी बात यह है कि मीमांसक मत मे भी स्वाश्रयविषयतासम्बन्ध से अर्थात् स्वाश्रयविषयकलौकिकप्रत्यक्षनिष्ठविषयिता सम्बन्ध से कत्व ही विजातीय वायुसंयोग का कार्यतावच्छेदक बन सकता है । जैसे विजातीय वायुसंयोग से ककारश्रावण प्रत्यक्षात्मक कार्य उत्पन्न होता है यह कत्वाश्रयविषयक लौकिकप्रत्यक्षात्मक होने से कत्व उसमे स्वाश्रयविषयकलौकिकप्रत्यक्षनिष्ठविषयितासम्बन्ध से रह कर विजातीय वायुसंयोग का कार्यतावच्छेदक बन सकता है । तब तो गौरव को लेश भी अवकाश नही रहेगा । इसलिये शब्द को नित्य एवं नानाविध मानना ही युक्तिसङ्गत है । यह हम मीमांसक मनीषियो की मान्यता है ।

शब्द अनित्य है - नैयायिक

नैयायिक :- अत्र वद० । जनाब यह रामकहानी असत्य है । इसका कारण यह है कि 'गकारो विनष्टो गकार उत्पन्न' इत्याकारक उत्पत्ति-विनाशरूप शब्दनिष्ठ वैधर्म्य के समकाल मे उत्पन्न होनेवाली 'स एव अयं गकार' इत्याकारक प्रत्यभिज्ञा पूर्वापरकालीन गकार मे अभेद को विषय नहीं करेगी किन्तु पूर्वगकारसजातीयत्वेन उत्तर गकार मे अभेद को यानी पूर्वोत्तरकालिक गकार के साजात्य को ही अर्थात् समान जाति को ही अपना विषय बनाती है । इसलिये पूर्वोत्तरकालीन गकार मे ऐक्य = अभेद की सिद्धि उपर्युक्त प्रत्यभिज्ञा से हो नहीं सकेगी । यहाँ यह शङ्का कि →" दर्शित प्रत्यभिज्ञा पूर्वापरकालीन गकार मे अभेद को विषय करती नहीं है किन्तु साजात्य को ही अपना विषय बनाती है तब तो 'तज्जातीयोऽयं गकार' 'तत्सदृशोऽयं गकार' इत्याद्याकारक प्रत्यभिज्ञा होनी चाहिये । मगर अनुभव तो हमारा यही है कि 'सोऽयं गकार' 'स एवायं गकार' इत्याकारक ही प्रत्यभिज्ञा होती है । इससे सिद्ध होता है कि पूर्वापरकालीन गकार अभिन्न है, सजातीय नहीं, क्योंकि साजात्य भेदनियत है" ← इसलिये निराधार है कि

चैव 'तज्जातीयोऽयमि'ति स्यात् न तु 'सोऽयमि'तीति वाच्यम्, तद्वृत्तिजात्यवच्छिन्नभेदाभावस्य भेदाभावत्वेनैव भानात् तद्व्यक्तित्वाच्छिन्नभेदाभावविषयकप्रत्यभिज्ञायास्तु भ्रान्तत्वमेव, अन्यथा तारमन्दादिनानावर्णेष्वपि तादृशप्रत्यभिज्ञादर्शनात् तेषामप्यैक्यप्रसङ्गात् ।

अपि चैव घटादेरपि व्यङ्ग्यत्वापत्तिः ।

## ◆ हेमलता ◆

इवात्ममनःसयोगे श्रोत्रमनोयोगादौ वा विनिगमनाविरहेण कल्पनापत्तेश्च । ततश्चोक्तप्रत्यभिज्ञायाः तत्साजात्यमेव विषयः । न च एव = निरुक्तप्रत्यभिज्ञायाः पूर्वापरकालीनककारादिसाजात्यविषयकत्वे 'तज्जातीयोऽयमि'ति प्रत्यभिज्ञा स्यात् न तु 'सोऽयमि'ति पूर्वापरव्यक्त्यैक्यविषयिणीति वाच्यम्, 'सोऽय ककार' इत्यत्र तद्वृत्तिजात्यवच्छिन्नभेदाभावस्य भेदाभावत्वेनेव भानात् । अय भावः 'सोऽय गकार' इत्यत्र इदन्त्वविशिष्टे तत्त्वविशिष्टस्य भेदाभावः बोध्यते । स च गवृत्तिगत्वजात्यवच्छिन्न-प्रतियोगिताकस्य भेदस्याभाव एव । स च न गत्वावच्छिन्नप्रतियोगिताकभेदाभावत्वेन भासते किन्तु भेदाभावत्वेनैव भासते । अतः पूर्वापरगकारयोः साजात्यमेव, गत्वेन भेदाऽप्रतियोगित्वे सति तद्व्यक्तित्वेन भेदप्रतियोगित्वात् । अत एव पूर्वोत्तरकालीनगकारयोः तद्व्यक्तित्वावच्छिन्नभेदाभावविषयकप्रत्यभिज्ञायास्तु भ्रान्तत्वमेव तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदवति उत्तरगकारे तद्व्यक्तिभेदाभावावगाहित्वात् । अन्यथा = 'सोऽय' इत्याकारकप्रत्यभिज्ञानोपलब्धेः तस्या अपि तद्व्यक्तित्वावच्छिन्नभेदाभावविषयकत्वसिद्ध्या तेषा = विजातीयाना तारमन्दादिशब्दाना अपि ऐक्यप्रसङ्गात् । न च तारत्वादिक ध्वनिधर्म एव शब्दे आरोप्यते न तु तच्छब्दस्य स्वाभाविक स्वरूपमिति वाच्यम्, तस्य तारत्वादिधर्मवत्तयैव नित्यमनुभूयमानतया तत्र तारत्वाद्यारोपाऽयोगात् । तदुक्त 'यो ह्यन्यरूपसवेद्यः सवेद्येतान्यथाऽपि वा । स मिथ्या न तु तेनैव यो नित्यमुपलभ्यते ॥ [ ] इति । न च ध्वनिधर्मत्वे तारत्वादीना ग्रहणमप्युपपद्यते, स्पर्शाद्यनन्तर्भावेन त्वगादीनामशब्दधर्मत्वेन च श्रोत्रस्याऽव्यापारात् ।

न चास्तु तर्हि नाभसा एव ध्वनय' इति वक्तव्यम् तथापि व्यक्तियोग्यतान्तर्भूत्वाज्जातियोग्यतायाः 'तारोऽय' इत्यादौ ध्वन्यस्फुरणे तद्गततारत्वाद्यस्फुरणप्रसङ्गात् । न चेदेव कत्वादिकमपि वायुगतमेवारोप्येतेति शब्दैक्य प्रसज्येत ।

अस्तु एवमेव, तत्त्वतः मीमासकमते शब्दस्यैकत्वादित्याशङ्कायामाह – अपि च एव = शब्दस्य नित्यत्वे, तुल्ययुक्त्या घटादेरपि व्यङ्ग्यत्वापत्तिः । एवमुत्पादकसामग्र्या व्यञ्जकत्वस्वीकारे सत्कार्यवादापत्त्या साङ्ख्यमतप्रवेशः दुर्वार एव मीमासकानाम् । ततश्च गत कार्यद्रव्यचर्चयाऽपि, घटाद्युत्पादविनाशाऽकल्पनात् । अतिसूक्ष्मेक्षिकया ग्राहकविश्रामे च गत घटादिना बाह्यतयैव ततो योगाचारमतप्रवेशप्रसङ्गः ।

## ▶ वल्लभा ◀

पूर्वकालीन गकार से उत्तरकालीन गकार का भिन्न होना तो वैधर्म्यकालोत्पन्न प्रत्यभिज्ञा से सिद्ध हो चूका है फिर भी 'स एवाय गकार' इत्याद्याकारक जो प्रत्यभिज्ञा उत्पन्न होती हे वह उन दोनो मे पूर्वकालीनगकारवृत्तिजाति से अवच्छिन्न प्रतियोगिता के निरूपक भेद के अभाव को ही अपना विषय भेदाभावत्वेन बनाती है । पूर्वकालीन गकार मे गत्व जाति रहती है । गत्वेन रूपेण पूर्वगकार और उत्तरकालीन गकार मे भेद रहता नही है । अर्थात् गत्वावच्छिन्नप्रतियोगिताकभेदाभाव पूर्वोत्तर गकार मे रहता हे । इसी भेदाभाव का भेदाभावत्वेन रूपेण भान 'सोऽय गकार' इस प्रत्यभिज्ञा मे होता है । पूर्वकालीन गकार व्यक्ति से उत्तरकालीन गकारव्यक्ति तो भिन्न ही हे । अत पूर्ववर्तिगकारव्यक्तित्वावच्छिन्नप्रतियोगिताक भेद उत्तरवर्ती गकारव्यक्ति मे रहता ही हे । अत यदि 'सोऽय गकार' यह प्रत्यभिज्ञा तद्व्यक्तित्वाच्छिन्नप्रतियोगिताक भेद के अभाव को अपना विषय बनाये तब तो वह भ्रान्त ही हो जायेगी, क्योंकि तद्व्यक्तित्वावच्छिन्नप्रतियोगिताक भेद उत्तरवर्ती गकार मे रहता हे ओर उसके अभाव का अवगाहन उक्त प्रत्यभिज्ञा मे होता हे । क्या तद्वान् मे तदभाव को विषय करनेवाली बुद्धि प्रमात्मक हो सकती है ? कदापि नही । यदि तद्व्यक्तित्वाच्छिन्नप्रतियोगिताकभेदाभाव को विषय बनाने पर भी 'सोऽय गकार ' इस प्रत्यभिज्ञा को सत्य मानी जाय तब तो तार, मन्द आदि विभिन्न वर्णों मे भी 'स एवाय' इत्याकारक प्रत्यभिज्ञा का दर्शन होने से तार, मन्द आदि वर्ण भी परस्पर अभिन्न बन जायेगे, जो मीमासको को भी मान्य नही हे । इसलिये तार, मन्द आदि शब्दो मे जैसे परस्पर भेद हे ठीक वेसे ही पूर्ववर्ती, उत्तरवर्ती शब्दो मे मिथ भेद है - यह सिद्ध होता है ।

### ■■ शब्द व्यङ्ग्य नही है ■■

नैयायिक :- अपि चै० । इसके अतिरिक्त यह भी यहाँ ज्ञातव्य हे कि यदि शब्द को नित्य मान कर विजातीय वायुसयोग

पुसः कण्ठताल्वाद्यभिघातादौ प्रवृत्तिदर्शनात् तस्य जन्यत्वमेवेति ।

इति शब्दनित्यत्वाऽनित्यत्वविचारः ॥७॥ श्रीवादमाला सम्पूर्णा ॥

◆ हेमलता ◆

ननु घटसाधनताज्ञानेन = घटत्वावच्छिन्नकारणतानिश्चयेन दण्डादौ प्रवृत्तिदर्शनात् दण्डादिकार्यतावच्छेदकत्वं घटत्वादावेव न तु घटज्ञानादाविति चेत् ? न निरुक्तरीत्या घटत्वस्य कार्यतावच्छेदकत्वमङ्गीकृत्य तस्य = घटस्य जन्यत्वे स्वीक्रियमाणे तु शब्दसाधनताज्ञानेन = शब्दत्वावच्छिन्नजनकतानिश्चयेन प्रतिपादयितुः पुंसः कण्ठताल्वाद्यभिघातादौ प्रवृत्तिदर्शनात् कण्ठताल्वाद्यभिघातजन्यतावच्छेदकताऽपि शब्दत्वे एव न तु शब्दज्ञानत्वादाविति तस्य = शब्दस्य अपि जन्यत्वमेव सिध्यतीति एक सीव्यतोऽपरप्रच्युतिः । एवञ्च 'शब्द उत्पन्न' इत्यादिप्रतीतौ शब्दपद शब्दाभिव्यक्तिपरमिति निरस्तम् 'वीणाया शब्द' इत्यादिप्रतीतिस्तथाप्युपपादयितुमशक्यत्वात् । स चाय क्षणिकः । क्षणिकत्वञ्च तृतीयक्षणवृत्तिध्वसप्रतियोगित्वमित्यतो नापसिद्धान्तः । आद्यशब्दस्य कार्यशब्देन नाशः चरमशब्दस्य कारणशब्दनाशेन नाशो मध्यमाना पुनरुभाभ्यामिति नैयायिका ।

तन्न, प्रतियोगितया नाशत्वावच्छिन्न प्रति स्वप्रतियोगिजन्यत्वसम्बन्धेन नाशत्वेनैवान्यत्र क्लृप्तेन कार्यकारणभावेन सकलशब्दनाशनिर्वाहात् । तथा च शब्दस्योत्सर्गतः क्षणचतुष्टयावस्थायिविजातीयपवनसयोगनाश्यत्वेन क्षणचतुष्टयावस्थायित्वोपपत्तिमती । न चैव क्षणिकत्वसिद्धान्तहानिः, अपेक्षाबुद्धिसग्रहाय तृतीयक्षणवृत्तिध्वसप्रतियोगिवृत्तिविभाजकोपाधिमत्त्वस्य तत्त्वादिति शिरोमणिनयानुयायिन ।

तच्चिन्त्यम् एव सति ज्ञानादेरपि विजातीयात्ममनःसयोगनाश्यत्वापत्त्या क्षणचतुष्टयावस्थायित्वापत्तेः तेषा बहुक्षणस्थायितामुपेक्ष्य प्रत्यभिज्ञाकदर्थन व्यसनमात्रमेव ।

► वल्लभा ◄

से उसकी अभिव्यक्ति मानी जाय तब तो घट आदि सभी पदार्थों को भी नित्य मान कर कुलाल, दण्ड आदि से उनकी भी अभिव्यक्ति = ज्ञप्ति होती है, न कि उत्पत्ति - यह भी निर्विवादरूप से माना जा सकता है, क्योंकि आक्षेप और परिहार दोनो मे समान रहेंगे । मगर ऐसा मानने पर मीमासक महाशय का साङ्ख्य मत मे प्रवेश हो जायेगा, क्योंकि शब्द की भाँति घट, पट आदि सभी पदार्थ नित्य सत् = कारण मे विद्यमान होते हुए कारणविशेष से केवल ज्ञात होते हैं - यही साङ्ख्य का सत्कार्यवाद है जो मीमासकों को भी मान्य नहीं है । यहाँ बचाव के लिये मीमासक की ओर से यह कहा जाय कि → साङ्ख्य का सत्कार्यवाद अयुक्त है, क्योंकि लोगो की दण्डादि मे घटसाधनताप्रकारक ज्ञान से प्रवृत्ति होती है, न कि घटज्ञानसाधनताप्रकारक ज्ञान से । दण्डादि मे घटसाधनताज्ञान यही बताता है कि घटादि दण्डादि से जन्य है, न कि घटज्ञानादि' ← तो यह कथन तो मीमासकमत मे भी समान रीति से लागू होगा कि लोगो की कण्ठतालुअभिघात आदि मे शब्दसाधनताप्रकारक ज्ञान से प्रवृत्ति होती है, न कि शब्दज्ञानसाधनताप्रकारक ज्ञान से । कण्ठतालुअभिघात आदि मे शब्दसाधनता का ज्ञान यही सिद्ध करता है कि कण्ठतालुअभिघात आदि से ककार आदि शब्द जन्य है न कि ककारआदिशब्दज्ञान । अत शब्दव्यङ्ग्यत्ववाद भी घटव्यङ्ग्यत्ववाद की भाँति अप्रामाणिक सिद्ध हो जायेगा । अत घटादिव्यङ्ग्यत्ववादापत्ति = सत्कार्यवादप्रसङ्ग को दूर हटाने का प्रयत्न करने पर शब्दव्यङ्ग्यत्ववाद भी टूट जायेगा । यह दोष भी मीमासकमत मे अपरिहार्य है । अत शब्द को विजातीय पवनसयोग से व्यङ्ग्य मानने की अपेक्षा जन्य मानना ही युक्तिसङ्गत है - यह नैयायिक मनीषियो का वक्तव्य है । इस तरह शब्दनित्यत्वाऽनित्यत्वविचारनामक सातवाँ वाद समाप्त हुआ । साथ ही प्रस्तुत वादमाला प्रकरण भी समाप्त हुआ ।

इस तरह न्यायविशारद न्यायाचार्य महोपाध्याय श्रीयशोविजयगणिवरविरचित वादमाला प्रकरण का मुनि यशोविजय के द्वारा किया गया हिन्दी भावानुवाद सानन्द सपूर्ण हुआ ।

अषाढ वद ६ - वि स २०४८
ॐकार सूरि जैन आराधना भवन,
गोपीपुरा, सुरत ।

◆ हेमलता ◆

वस्तुतः शब्दस्य नित्यानित्यत्वमेव, केवलनित्यत्वे प्रकृतिप्रत्ययादिविभागेनानुशासनादिना साधनानुपपत्तेः, केवलाऽनित्यत्वेऽपि क्षणिके तत्र प्रकृतिप्रत्ययादिनोपस्काराधानासम्भवात् । अतो द्रव्यत्वेन तस्य नित्यत्व शब्दत्वेन चानित्यत्वमिति तु वय स्याद्वादिन ।

शब्दपरिणामापेक्षयोत्कर्षतः स्थितिरावलिकाया असङ्ख्येयभाग । तदुक्त व्याख्याप्रज्ञप्तो 'सद्दपरिणए ण भते ! पोग्गले कालओ केवचिर होइ ? गोयमा ! जहन्नेण एग समय उक्कोसेण आवलियाए असखेज्जइ भाग' [व्या प्र श ५/७, सू ७] इति । अत्र च बहु वक्तव्यम् । तच्च मत्कृतमोक्षरत्नातोऽवसेयमिति शम् ।

★ हेमलताटीकाकृत्प्रशस्तिः ★

प्रेमसूरीशपट्टाद्रौ, राजमान दिनेशवत् ।
भुवनभानुसूरीश, गच्छाधिप नमाम्यहम् ॥१॥

श्रीजयघोषसूरीश, तदीयपट्टभूषणम् ।
स्वगुरुदत्तसिद्धान्तदिवाकरपद स्तुवे ॥२॥

नौमि श्रीहेमसूरिं त, येन दीक्षा ददौ हि मे ।
यदीयोपकृतिस्मृत्यै, हेमलता व्यधायि हि ॥३॥

प्रमादपरिकल्पित यदि च किञ्चिदालोचित,
तदस्ति खलु दूषण मम हि नैव चान्यस्य तत् ।
यदत्र नवकल्पनाकलिततर्कवाग्वैभव,
तदेव जयसुन्दरस्फुरदमोघशिक्षाफलम् ॥४॥

स्वगुरु विश्वकल्याणविजयाख्य नमाम्यहम् ।
भुवनभानुसूरीशशिष्य प्रभावक मुदा ॥५॥

गजगत्यभ्रराशिप्रमिते (२०४८) विक्रमवत्सरे ।
पूर्णा कृतिः तृतीयाऽस्तु यशोविजयसम्पदे ॥६॥

महामहोपाध्याययशोविजयगणिप्रणीता मुनियशोविजयरचितहेमलतासमलङ्कृता

## वादमाला समाप्ता ।

      

# परिशिष्ट - १

हेमलताया साक्षितया उद्धृताना प्रदर्शिताना च ग्रन्थाना सूचि

| क्रम | नाम | पृष्ठ |
|---|---|---|
| १ | अनुद्भूतरूपादिखण्डनवादवीचि | १८० |
| २ | आलोक [तत्त्वचिन्तामणिटीका] | १०६,१२१ |
| ३ | ऐतेरेय उपनिषत् | १७० |
| ४ | किरणावली | १५४ |
| ५ | किरणावलीरहस्य | १५४ |
| ६ | जयलता | २६, १२२, १५८ |
| ७ | जीवविचार | १२६ |
| ८ | तत्त्वचिन्तामणि | १११, १२२ |
| ९ | दीधिति | १५६ |
| १० | नारदपरिव्राजक उपनिषत् | १७० |
| ११ | न्यायकणिका | १३८ |
| १२ | न्यायकुसुमाञ्जलिप्रकाश | १२८ |
| १३ | न्यायखण्डखाद्य | १ |
| १४ | न्यायभूषण | १२८ |
| १५ | पक्षताजागदीशीगन्ना | १७९ |
| १६ | पदार्थमाला | १९४ |
| १७ | परामर्शगादाधरी | १८० |
| १८ | प्रकाश | १२२ |
| १९ | प्रतिमाशतक | १ |
| २० | प्रतियोगिज्ञानहेतुतावाद | १८९ |
| २१ | प्रमेयमाला | १२२, १८९ |
| २२ | बृहदारण्यक उपनिषत् | १७० |
| २३ | भस्मजाबाल उपनिषत् | १७० |
| २४ | मञ्जूषा | १०९, ११६ |
| २५ | मध्यमस्याद्वादरहस्य | १३६ |
| २६ | महानारायण उपनिषत् | १७० |
| २७ | मुक्तावली मञ्जूषा | १०९, ११६ |
| २८ | मोक्षरत्ना | १९९ |
| २९ | रत्नाकरावतारिका | १७० |
| ३० | वादमहार्णव | ५४ |
| ३१ | वायूष्मादे प्रत्यक्षत्वाप्रत्यक्षत्वविवादरहस्य | १८८ |
| ३२ | वीतरागस्तोत्र | ५४ |
| ३३ | व्याख्याप्रज्ञप्ति | १९९ |
| ३४ | सामान्यलक्षणाकाशिकानन्दी | १२२ |
| ३५ | सामान्यलक्षणा - गादाधरी | १५५, १८१ |
| ३६ | स्याद्वादकल्पलता | १६३, १६७, १८५, १८९ |
| ३७ | स्याद्वादरत्नाकार | १६९ |
| ३८ | स्याद्वादरहस्य | १७० |

# परिशिष्ट - २

## हेमलताया दर्शिताना विशेषनाम्ना सूचिः



# परिशिष्ट - ३

## हेमलताया खण्डिताना ग्रन्थाना सूचिः